शुक्लयजुर्वेदः

# वाजसनेयिसंहिता ।

माध्यन्दिनीयां शाखाम् अनुसृत्य ।

श्रीमन्महीधरकृतवेददीपाख्यभाष्यसहिता ।


पण्डितकुलपतिना बि,ए उपाधिधारिणा

श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण

संस्कृता प्रकाशिता च ।


तृतीयसंस्करणम् ।




कलिकातानगर्य्याम्

गोवर्द्धनयन्त्रे

मुद्रिता ।

ईं १९०८ ।

# वाजसनेयिसंहितामन्त्राणामकारादिक्रमेण सूचीपत्रम् ।

इति मन्त्राणां सूची समाप्ता।

## अथ सर्वानुक्रमणिकोक्तं छन्दो दैवतमार्षम् ॥

अथातश्छन्दोदैवता गायत्र्या अग्नि-रुष्णिहः सवितानुष्टुभः सोमो बृहत्या बृहस्पतिः पङ्क्तिर्वरुणस्त्रिष्टुभ इन्द्रो जगत्या विश्वे देवा विराजो मित्रः स्वराजो वरुणोऽतिच्छन्दसः प्रजापति-र्विच्छन्दसो वायुर्द्विपदायाः पुरुष एक-पदाया ब्रह्मा। सर्वा ऋच आग्नेय्यः सर्वाणि यजूंषि वायव्यानि सर्वाणि सामानि सौराणि सर्वाणि ब्राह्मणानि च। स्वाहाकारस्याग्निर्वषट्कारस्य विश्वे-देवाः। कर्मारम्भे मन्त्राणां देवता वेदितव्याः मन्त्रस्य मनसि देवतां ततो हविर्हूयते देवतामविज्ञाय यो जुहोति देवास्तस्य हविर्न जुषन्ते। स्वाध्यायमपि योऽधीते मन्त्रदैवतज्ञः सोऽमुष्मिंल्लोके देवैरपीड्यते॥ तस्माच्च देवता वेद्या मन्त्रे मन्त्रे प्रयत्नतः। मन्त्राणां देवता-ज्ञानान्मन्त्रार्थमधिगच्छति॥ मन्त्रार्थ-

स्नानात् विधूतपाप्मा नाकमभ्येति ॥ न हि कश्चिदविज्ञाय याथातथ्येन देवताः । श्रौतानां कर्मणां विप्रः आर्त्तानां चाश्नुते फलम् ॥ १० ॥

अनादिष्टमन्त्रगणे सवान्ते कर्मणि परिभाषितं मन्त्रगणं वक्ष्यामः । सर्वमाग्नेयं गायत्रं गौतमीयं सर्वं सावित्रमौष्णिहं भारद्वाजीयं सर्वं सौम्यमानुष्टुभमाथर्वणिकं सर्वं बार्हस्पत्यं बार्हतमाङ्गिरसं सर्वं वारुणं पाङ्क्तमामैत्रायणीयं सर्वमैन्द्रं त्रैष्टुभं याज्ञवल्कीयं सर्वमादित्यदैवतं जागतं कौत्सम् ॥ ११ ॥

ज्योतिष्टोमे दीक्षाप्रभृति वक्ष्यामः दीक्षायां भृगुरग्निर्विष्णुः गायत्री प्रायणीयेऽङ्गिरसोऽदितिरुष्णिक् क्रये विश्वामित्रः सोमोऽनुष्टुप् आतिथ्ये वसिष्ठो विष्णुर्बृहती प्रवर्ग्ये कश्यप आदित्यः पङ्क्तिः उपसत्स्वात्रेय उपसद्देवता त्रिष्टुप् अग्नीषोमीयेऽगस्त्योऽग्नीषोमौ जगती प्रायणीयेऽतिरात्र आङ्गिरसोऽहोरात्रं अतिजगती चतुर्विंशत्यहे शौकरायणः संवत्सरः शक्वरी अभिप्लवे षडहे सावर्णोऽर्धमासा मासाश्चातिशक्वरी पृष्ठ्ये षडहे सायकायन ऋतवोऽष्टिः अभिजिति प्रियव्रतो अग्निरत्यष्टिः स्वरसामसु सप्तव्यापो धृति विषुवति रौहिणायन आदित्योऽतिधृतिः विश्वजिति सौभर इन्द्रः कृतिः गो आयुषोर्लोकाग्निर्मिता- वरुणौ प्रकृतिः दशरात्र आचार्यो विश्वेदेवा आकृतिः दाशरात्रिके पृष्ठ्ये षडहे भारद्वाजो दिशो विकृतिः छन्दोमेषु शौल्वायन इमे लोकाः संकृतिः दशमेऽहनि पराशरः संवत्सरोऽभिकृतिः महाव्रते शौखिनः प्रजापतिरुत्कृतिः उदयनीयेऽतिरात्रे भौवनायनो वायुश्छन्दांसि सर्वाणि ॥ १२ ॥ ऋषिभिरुपलक्षितं वाक्यमृषयः छन्दोभिरुपलक्षिता देवता मन्त्रवर्णाद्धव्यजुषो विनियोगतश्च विज्ञेयाः । सर्वमेतच्छन्दो दैवतमार्षं च विज्ञाय यत्किञ्चिज्जपहोमादि करोति तस्य फलमश्नुते । ब्रह्मायज्ञारम्भे यथाविधि स्नात्वा छन्दःपुरुषमेनोनिर्णोदनं शरीरे न्यसेत् तिर्यग्विस्तृतमस्य ऊर्ध्वबुध्नः तस्याक्षिणी गौतम भरद्वाजौ श्रोत्रे विश्वामित्रजमदग्नी नासिके वसिष्ठकश्यपौ वागत्रिः । गायत्रीं छन्दोऽग्निदैवतां शिरसि विन्यसेद्देवमेवोष्णिहं सवितारं ग्रीवास्वनुष्टुभं बृहतीं बृहस्पतिम् बाह्वोर्बृहद्रथन्तरे द्यावापृथिवी मध्ये त्रिष्टुभमिन्द्रं श्रोण्योर्जगतीमादित्यम् मेढ्रेऽतिच्छन्दसं प्रजापतिम् पायौ यज्ञायज्ञियं वैश्वानरम् ऊर्वोरनुष्टुभं विश्वान् देवान् अष्ठीवतोः पङ्क्तिं मरुतः पादयोर्द्विपदां विष्णुम् प्राणेषु विच्छन्दसं वायुम् न्यूनातिरिक्तेष्वङ्गेषु न्यूना[illegible] आपो देवतेत्येवं सर्वाङ्गेषु योजयित्वा वाङ्मयः सम्पद्यते पापानुग्रहसमर्थो भवति ब्राह्मं तेजश्च वर्धते न कुतश्चिद्भयं विन्दते अन्वयो यत्र संघः साम-

मयो ब्रह्ममयस्तेजोमयोऽमृतमयः सम्भूय: ब्रह्माप्येति। यश्चाद्दैवतज्ञब्रह्मचारिणे नातपस्विने नासंवत्सरोषिताय नाप्रवक्त्रेऽनुब्रूयादनेनाधीतेन चाद्यं यश्चाद्य फलमवाप्नोति अनेन च सम्यग्ज्ञानेन ब्रह्मणः सायुज्यं सलोकतामाप्नोत्याप्नोति ॥ १२ ॥

इति सर्वानुक्रमणिकायां चतुर्थोऽध्यायः ॥

अथ छन्दांसि गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यतिजगतीशक्वर्यतिशक्वर्यष्ट्यत्यष्टिधृत्यतिधृतयः कृतिप्रकृत्याकृतिविकृतिसंकृत्यभिकृत्युत्कृतयश्चतर्विंशत्यक्षरादीनि चतुरुत्तराणि। ऊनाधिकेनैकेन निचृद्भुरिजौ द्वाभ्यां विराट्स्वराजौ। पादपूरणार्थं तु क्षैप्रसंयोगैकाक्षरीभावान्व्यूहेत्। पादे तु समवर्णे पादविशेषात्संज्ञाविशेषास्तानुक्रामत एवोदाहरिष्यामो विराड्रूपा विराट्स्थानाश्च बहूनाम् अपि त्रैष्टुभ एवेत्यूह्येयः तत्र दशैकादशद्वादशाक्षराणां वैराजत्रैष्टुभजागता इति संज्ञा अनादेशेऽष्टाक्षराः पादाश्चतुष्पदाश्चर्चः ॥ १ ॥ प्रथमं छन्दस्त्रिपदा गायत्री। पञ्चकाश्चत्वारः षट्कश्चैकश्चतुष्को वा पदपङ्क्तिः। षट्सप्तकादशा उष्णिग्गर्भा। त्रयः सप्तकाः पादनिचृन्मध्यमः षट्कश्चेदतिनिचृद्द्वावष्टकौ चेद्यवमध्या यस्यास्तु [illegible]काष्टकाः सा वर्धमाना विपरीता प्रतिष्ठा। द्वौ षट्कौ सप्तकश्चेति ह्रसीयसी ॥ २ ॥ द्वितीयमुष्णिक् विराड्ढान्यो द्वादशकः। आद्यश्चेत्पुर उष्णिग्मध्यमश्चेत्ककुप्। त्रैष्टुभजागतचतुष्काः ककुन्न्यङ्कुशिरैकादशिनौ: परः षट्कस्तनुशिरा मध्ये चेत्पिपीलिकमध्या द्वः पञ्चकत्रयोऽष्टका अनुष्टुब्गर्भा। चतुःसप्तकोष्णिगेव ॥ ३ ॥ तृतीयमनुष्टुप्। पञ्च पञ्चकाः षट्कश्चैको महापदपङ्क्तिः। जागतावष्टकश्च कृतिः। मध्ये चेदष्टकः पिपीलिकामध्या। नवकयोर्मध्ये जागतः काविराट्। नववैराजत्रयोदशैर्नष्टरूपा। दशकास्त्रयो विराडेकादशका वा ॥४॥ चतुर्थं बृहती तृतीयो द्वादशकः। आद्यश्चेत्पुरस्तात् बृहती। द्वितीयश्चेन्न्यङ्कुसारिण्युरोबृहती स्कन्धोग्रीवी वा। अन्त्यश्चेदुपरिष्टाद्बृहती। अष्टिनोर्मध्ये दशकौ विष्टारबृहती। त्रिजागतोर्ध्वं बृहती। त्रयोदशिनोर्मध्येऽष्टकः पिपीलिकमध्या। नवकाष्टकैकादशाष्टिनौ विषमपदा। चतुर्नवका बृहत्येव ॥ ५ ॥ पञ्चमं पङ्क्तिः पञ्चपदा। अथ चतुष्पादा विराड्दशका। अयुजौ जागतौ सतोबृहती युजौ चाद्विपरीतावौ चेत् प्रस्तारपङ्क्तिः अन्त्यौ चेदास्तारपङ्क्तिराद्यन्त्यौ चेत्संस्तारपङ्क्तिर्मध्यमौ चेद्विष्टारपङ्क्तिः ॥ ६ ॥ षष्ठं त्रिष्टुप् त्रैष्टुभपदा। द्वौ तु जागतौ यस्या सा जागते जगती त्रैष्टुभे त्रिष्टुप्। वैराजौ जागतौ चाभिसारिणी। नवकौ वैराजस्त्रैष्टुभश्च द्वौ वा वैराजौ नवकस्त्रैष्टुभश्च विराट्स्थानैकादशिनस्त्रयो-

ऽष्टकाश्च विराड्रूपा। द्वादशिनस्त्रयो-ऽष्टकाश्च ज्योतिष्मती यतोऽष्टकास्ततो ज्योतिः। चत्वारोऽष्टका आगतश्च महा-बृहती। मध्ये आगतश्चेद्यवमध्या। चाद्यौ दशकावष्टकास्त्रयः पंक्त्युत्तरा विराट्पूर्वा वा ॥ ७ ॥ सप्तमं जगती आगतपदा। षष्टिनस्त्रयः स्त्री च द्वौ महासती बृहती। अष्टकौ सप्तकः षट्कौ दशकौ नवकश्च षडष्टका वा महापङ्क्तिः॥ माध्यन्दिनीये वाजसनयके स-र्वानुक्रमणिकैषा कृतिर्भगवतः कात्यायन-स्यैषा कृतिर्भगवतः कात्यायनस्य ॥ ८ ॥

इति सर्वानुक्रमणिकायां पञ्चमोऽध्यायः।



# श्रीशुक्लयजुर्वेदः

## वाजसनेयिसंहिता माध्यन्दिनीशाखा ।

---

### प्रथमोऽध्यायः ।

इति ॐ । इषे त्वा । ऊर्जे त्वा । वायवं स्थ।
देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण
आप्यायध्वमघ्न्या इन्द्राय भागम्प्रजावतीरनमीवा
अयक्ष्मा मा व स्तेन ईशत माघशंसो ध्रुवा
अस्मिन् गोपतौ स्यात् बह्वीः । यजमानस्य पशून्
पाहि ॥ १ ॥

प्रणम्य लक्ष्मीं नृहरिं गणेशं भाष्यं विलोक्यौवटमाधवीयम् ।
यजुर्मनूनां विलिखामि चार्थं परोपकाराय निजेक्षणाय ॥ १ ॥

दूरादसूयां निर्धूय कृपां कृत्वा ममोपरि ।
विलोक्यो वेददीपोऽयं बुद्धिमद्भिर्द्विजोत्तमैः ॥ २ ॥

तत्रादौ ब्रह्मपरम्परया प्राप्तं वेदं वेदव्यासो मन्दमतीन् मनुष्यान् विचिन्त्य तत्कृपया चतुर्धा व्यस्य ऋग्यजुःसामाथर्वाख्यांश्चतुरो वेदान् पै[illegible]मिनिसुमन्तुभ्यः क्रमात् उपदिदेश ते च स्वशिष्येभ्यः। एवं परम्परया सहस्रशाखो वेदो जातः। तत्र व्यासशिष्यो वैशम्पायनो या[illegible]दिभ्यः शिष्येभ्यो यजुर्वेदमध्यापयत्। तत्र कदाचित् केनापि हेतुना

क्रुद्धो वैशम्पायनो याज्ञवल्क्यं प्रत्युवाच मदधीतं त्यजेति। स योगसामर्थ्यान्मूर्त्तां विद्यां विधाय उद्ववाम। वान्तानि यजूंषि गृह्णीतेति गुरुणा अन्ये वैशम्पायनशिष्यास्तित्तिरयो भूत्वा यजूंषि अभक्षयन्। तानि यजूंषि बुद्धिमालिन्यात् कृष्णानि जातानि। ततो दुःखितो याज्ञवल्क्यः सूर्य्यमाराध्य अन्यानि शुक्लानि यजूंषि प्राप्तवान्। तानि च जाबालबौधेयकाण्वमाध्यन्दिनादिभ्यः पञ्चदश शिष्येभ्यः पाठितवान्। तथा च श्रुतिः [ बृहदारण्य० माध्य० ५, ५, ३३ ] आदित्यानीमानि शुक्लानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्त इति। अस्यार्थः। आदित्यादधीतान्यादित्यानि शुक्लानि शुद्धानि। वाजस्यान्नस्य सनिर्दानं यस्य स वाजसनिस्तदपत्यं वाजसनेयस्तेन याज्ञवल्क्येन शिष्येभ्य आख्यायन्ते कथ्यन्त इत्यर्थः। तत्र मध्यन्दिनेन महर्षिणा लब्धो यजुर्वेदशाखाविशेषः माध्यन्दिनः। यद्यपि याज्ञवल्क्येन बहुभ्यः शिष्येभ्य उपदिष्टः तथापि ईश्वरकृपया मध्यन्दिनसम्बन्धितया लोके प्रख्यायते। तं माध्यन्दिनं वेदं येऽधीयन्ते विदन्ति वा शिष्यपरम्परया वर्त्तमानास्तेऽपि माध्यन्दिना उच्यन्ते॥

अतएव 'स्वाध्यायोऽध्येतव्यः' इति [ शत० ब्रा० ११, ५, ६, ७ ] स्वशाखाध्ययनं विहितम्। तच्चाध्ययनं प्रतिमन्त्रमृषिच्छन्दोदेवताविनियोगार्थज्ञानपूर्वकं विधेयम् अन्यथा दोषश्रवणात्। 'एतान्यविदित्वा योऽधीतेऽनुब्रूते जपति जुहोति यजते याजयते तस्य ब्रह्म निर्वीर्य्यं यातयामं भवत्यथान्तराश्वगर्त्तं वापद्यते स्थाणुं वर्च्छति प्रमीयते वा पापीयान् भवति' इति कात्यायनोक्तेः। [ अनुक्रम० १, १ ] ऋष्यादिज्ञाने फलश्रवणाच्च। अथ विज्ञायैतानि योऽधीते तस्य वीर्य्यवदथ योऽर्थवित्तस्य वीर्य्यवत्तरं भवति जपित्वा हुत्वेष्ट्वा तत्फलेन

कुर्वते'—इत्युक्तेश्च । [ अनु॰ १, १ ] तस्मादिदमन्त्राणामृष्या-
दिज्ञानमर्थज्ञानं चावश्यमन्यथा फलवैकल्यात् । तत्र यजुर्वेद-
मन्त्रेषु कानिचित् यजूंषि कानिचन ऋचः । तत्र ऋचां निय-
ताक्षरपादावसानानामार्चत्वं छन्दः कात्यायनेनोक्तम् ।
यजुषां षडुत्तरशताक्षरावसानानामेकाक्षरादीनां पिङ्गलेन
दैव्येकमित्यादिनोक्तं छन्दो बोद्धव्यम् । तदधिकानां तु होता
यक्षद्वनस्पतिमभिहीत्यादीनां [ अध्या॰ २१, ४६ ] नास्ति छन्दः-
कल्पना ॥—तत्राद्याध्याये द्वितीयाध्यायाष्टाविंशतिकण्डिकाश्चेति
दर्शपौर्णमासमन्त्राः । तेषां परमेष्ठी प्रजापतिरृषिर्देवताः
प्राजापत्या वा । द्वितीयाध्यायान्तिमकण्डिकाषट्कम्पितृयज्ञ-
मन्त्रास्तेषां प्रजापतिरृषिः । आद्येऽध्याये सर्वाणि यजूंषि
एका पुरा क्रूरस्येति [ १, २८ ] ऋक् । यजुषां पिङ्गलोक्तं
छन्दो बोद्धव्यं विस्तरभयान्नोच्यते । ऋचान्तु छन्दांसि
वक्ष्यामि । तत्राद्यायां कण्डिकायां पञ्च मन्त्राः । द्वौ
त्र्यक्षरौ । तृतीयश्चतुरक्षरः । चतुर्थो द्विषष्ट्यक्षरः । पञ्चमो
नवाक्षरः ॥—तत्र प्रकृतित्वादादौ दर्शपौर्णमासमन्त्राः ।
यत्र कृत्स्नाङ्गानामुपदेशः क्रियते सा प्रकृतिः । यत्र
विशेषाङ्गमात्रमुपदिश्यतेऽङ्गान्तराणि तु प्रकृतेरतिदिश्यन्ते
सा विकृतिः । तत्र प्रकृतिस्त्रिविधा अग्निहोत्रमिष्टिः
सोमश्चेति । तत्र यद्यपि कृताधानस्यैव दर्शपौर्णमासयोरधि-
कारादादौ अग्न्याधानमन्त्रा वक्तुमुचितास्तथाप्याधाने पव-
मानेष्टयो विधेयास्ता अन्तराधानस्यैवासिद्धेः । पवमानेष्टी-
नाञ्च दर्शपौर्णमासविकृतित्वात्सोमेऽपि दीक्षणीयप्रायणीया-
दिषु दर्शपौर्णमाससापेक्षत्वादादौ दर्शपौर्णमासमन्त्राः गदितुं
युक्ताः । ते चेषेत्वादयः ॥—तत्रेषे त्वेति द्विपदस्त्र्यक्षरो मन्त्रः ।
तस्य दैव्यनुष्टुप्छन्दः । शाखा देवता । पलाशशाखाच्छेदने विनि-

नार्थो मन्त्रः। ऊर्जे त्वेति सन्नमनार्थः। सन्नमनं ऋजूकरणं शाखालग्नधूल्याद्यपनयनम् । इदं पत्रान्तरमित्यर्थः। ऊर्जे त्वा। शाखैव देवता। हे शाखे ! 'त्वा' त्वां सन्नमयामि ऋजूकरोमि। किमर्थम् 'ऊर्जे' ऊर्ज बलप्राणनयोः। ऊर्जति सर्वान्मनुष्य-पश्वादीन् बलयति अन्नादिना दृढशरीरान् करोति। यद्वा। प्राणयति प्रकर्षेण चेष्टयतीति व्युत्पत्तिद्वयेन वृष्टिगतो जला-त्मको रस ऊर्ग्शब्देनोच्यते। तस्मै रसाय त्वामनुमार्ज्मि। यो वृष्टादूर्ग्रसो जायते तस्मै तदाहेति श्रुतेः [ १, ७, १, २ ]। एतन्मन्त्रद्वयपाठेनाध्वर्युरिष्यमाणमन्नं बलकरमाज्यक्षीरादि-रसञ्च यजमाने सम्पादयत्येव। 'इषे त्वोर्जे त्वेत्याहेषमेवोर्जं यजमाने दधाति' इति तित्तिरवचनात्। कात्यायनः [ ४, २, ७ ] 'मातृभिर्वत्सान् संसृज्य वत्सं शाखयोपस्पृशति वायवस्थेति'। वायुर्देवता। वा गतिगन्धनयोः। वान्ति गच्छन्ति वायवो गन्तारः। हे वत्साः ! यूयं 'वायवः स्थ' मातृभ्यः सकाशात् अन्यत्र गन्तारो भवत। मातृभिः सह गमने सति सायं दोहो न लभ्यत इत्यभिप्रायः। यद्वा। वायुसादृश्याद्-वत्सानां वायुत्वम्। यथा वायुः पादप्रक्षालननिष्ठीवनादिभिरुप-हतां भूमिं शोषयित्वा पुनाति। एवं वत्सा अप्यनुलेपनहेतुभूत-गोमयादिदानेन भूमिं पुनन्ति तस्माद्वायुसादृश्यम्। अथवा नृणां यथा स्वनिवासाय गृहनिर्माणसामर्थ्यमस्ति एवं पशूनां तद-भावान्निरावरणेऽन्तरिक्षे सञ्चरणादन्तरिक्षमेव पशूनां देवता। तस्यान्तरिक्षस्य वायुरधिपतिः स च वायुः स्वावयवानिव पशून् पालयतीति पशूनां वायुरूपत्वम्। यथा पालनाय पशून् वायवे समर्पयितुं वायुरूपत्वमापाद्य वायव स्थेति मन्त्रः प्रवर्त्तते। तदुक्तं तित्तिरिणा वायव स्थेत्याह वायुर्वा अन्तरिक्षस्याध्यक्षो-ऽन्तरिक्षदेवत्याः खलु पशवो वायव एवैतान् परिददातीति।

यदा तृणभक्षणायाह्नि तत्र तत्रारण्ये चरित्वा सायंकाले वायुवेगेन यजमानगृहे समागमनाय पशून् प्रवर्त्तयितुं वायुरूपत्वमुच्यते। कात्यायनः [ ४, २, ८. १० ] देवो व इति मातॄणाम् एकां व्याकृत्यैन्द्रम्भवति माहेन्द्रं वेति'। अस्यार्थः। पूर्वसूत्राच्छाखयोपस्पृशतीति पदद्वयमनुवर्त्तते। वत्सानां मातरो या गावः सन्ति तासां मध्ये एकाङ्गां व्याकृत्य पृथक्कृत्य देवो व इति मन्त्रेण शाखयोपस्पृशेत्। तथा सति गोसम्बन्धिदधिरूपं हविरैन्द्रं माहेन्द्रं वा भवतीति। देवो व इति मन्त्रस्येन्द्रो देवता। षू प्रेरणे। सुवति स्वस्वव्यापारे प्रेरयतीति सविता। देवः द्योतमानः परमेश्वरः। हे गावः! वो युष्मान् प्रार्पयतु प्रभूततृणोपेतं वनं गमयतु। किमर्थम्? श्रेष्ठतमाय कर्म्मणे। चतुर्विधं कर्म्म। अप्रशस्तम्। प्रशस्तम्। श्रेष्ठम्। श्रेष्ठतमञ्चेति। लोकविरुद्धं वधबन्धचौर्य्यादिकमप्रशस्तम्। लोकैः श्लाघनीयं बन्धुवर्गपोषणादिकं प्रशस्तम्। स्मृत्युक्तं वापीकूपतड़ागादिकं श्रेष्ठम्। वेदोक्तं यज्ञरूपं श्रेष्ठतममिति तल्लक्षणम्। यज्ञो वै श्रेष्ठतमं कर्मेति श्रुतेः [ १, ७, १, ५ ]। हे अघ्न्याः गावः! गोवधस्योपपातकरूपत्वाद्धन्तुमयोग्या अघ्न्या उच्यन्ते। तथाविधा यूयमिन्द्राय भागम् इन्द्रमुद्दिश्य सम्पादयिष्यमाणं दधिरूपहेतुं क्षीरम् आप्यायध्वं समन्ताद्वर्धयध्वम्। सर्वास्वपि गोषु प्रभूतक्षीरं कुरुत। ओप्यायी वृद्धौ [ धा० १४ १७ ]। वो युष्मानपहर्त्तुं स्तेनश्चौरो मा ईशत ईश्वरः समर्थो मा भूत्। अघशंसः अघेन तीव्रपापेन भक्षणादिना शंसो घातको व्याघ्रादिरपि मा ईशत वो हिंसको मा भूत्। कीदृश्यो युष्मान्? प्रजावतीः बहुपत्याः। अनमीवाः अमीवा व्याधिः स नास्ति यासां ताः अनमीवाः कृमिदुष्टत्वादिस्वल्परोगरहिताः। अयक्ष्माः यक्ष्मा रोगराजः प्रबलरोगरहिताः। किञ्च। यूयं गोपतौ

न्त्वा युष्माकं पत्यावस्मिन् यजमाने ध्रुवाः शाश्वतिकीः बह्वी-बहुविधाः स्यात् भवत ॥ का० [ ४, २, ११ ] 'यजमानस्य पशू-नित्यग्न्यागारस्यान्यतरस्य पुरस्ताच्छाखामुपगूहतीति'। हे पलाशशाखे! त्वमुन्नतप्रदेशे स्थित्वा प्रतीक्षमाणा सती यज-मानस्य पशून् अरण्ये मध्वरतस्चोरव्याघ्रादिभयात् पाहि रक्ष। शाखया रक्षिता गावो निरुपद्रवाः सत्यः सायं पुनरागच्छन्त्वी-त्याशयः। यद्यप्यचेतना शाखा तथापि तदभिमानिनीं देवता-मुद्दिश्यैवमुक्तम्। यथा शास्त्रज्ञा अचेतनेऽपि शालग्रामे शास्त्र-दृष्ट्या विष्णुसन्निधिमभिप्रेत्य विष्णुं सम्बोध्य षोड़शोपचारान् विदधत इत्युक्तं प्राक् ॥

अथ व्याकरणप्रक्रिया। 'इषे' इषेरिच्छार्थस्य कर्मणि क्विप्। किस्त्वादुपधाया गुणाभावः। तस्माच्चतुर्थ्येकवचनम्। इषशब्दगत इकारो धातुस्वरेण प्रातिपदिकस्वरेण चोदात्तः। स्वरविधौ व्यञ्जनस्याविद्यमानत्वात् [ पा० का० ६, १, २२३ परि० १ ] चतुर्थ्येकवचनस्य प्रत्ययत्वादाद्युदात्तत्वे प्राप्ते अनु-दात्तौ सुप्पिताविति [ पा० ३, १, ४ ] तदपवादेनानुदात्तत्वे प्राप्तेऽपि सावेकाचस्तृतीयादिर्विभक्तिरित्युदात्तत्वम् [पा० ६, १, १६८ ]। तस्मिन् सति अनुदात्तं पदमेकवर्जमितीकारोऽनु-दात्तः [ पा० ६, १, १५८ ]। यद्यप्येकशब्देन द्वयोरुदात्तयो-रन्यतरो यः कोऽपि वक्तुं शक्यते तथापि सति शिष्टस्वरो बली-यानिति न्यायेन [ पा० का० ६, १, १५८ वा ८ ] विभक्तिगत उदात्त एव प्रबलः॥ तथा सत्यनुदात्तादिकमुदात्तान्तमिदं पदं सम्पन्नम्। 'त्वा'। युषेर्भजनार्थस्य युष्यसिभ्यां मदिगिति [ उ० १, १३ ७ ] मदिक्प्रत्ययान्तस्य युष्मच्छब्दस्य द्वितीयायां त्वेति रूपम्। तस्य प्रातिपदिकस्वरेण यद्यपि उदात्तः प्राप्त-स्तथापि अनुदात्तं सर्वमपादादावित्यस्य सूत्रस्य अनुवृत्तौ

सत्यां [पा० ८, १, १८] त्वामौ द्वितीयाया इति [पा० ८, १, २३] त्वादेशविधानादयं शब्दोऽनुदात्तः॥ ऊर्जे। ऊर्ज बलप्राणनयोरस्मात् क्विप्। ऊर्जति बलवन्तं प्राणवन्तं वा करोति इत्यूर्क् अन्नम्। ऊर्गित्यन्ननामोर्जयति इति सत इति यास्कः [निरु० ८, २७]। स्वर इषेवत्। संहितायां तूदात्तादनुदात्तस्य स्वरित इति [पा० ८, ४, ६६] त्वाशब्दस्य स्वरितत्वम्। मन्त्रद्वयस्य संहितायाम् ऊर्जे इति ऊकारस्य स्वरितात् संहितायामनुदात्तानामिति [पा० १, २, ३९] प्रचयाभिधायामेकश्रुतौ प्राप्तायां तदपवादकत्वेनोदात्तस्वरित-परस्य सन्नतर इत्यत्यन्तनीचोऽनुदात्तो भवति [पा० १, २, ४०] अग्रिमस्य त्वाशब्दस्य स्वरितत्वम्। एवमुत्तरपदेषु संहितायां स्वरा ऊहनीयाः॥ 'वायवः' वातेर्गत्यर्थात् कृवायाजिमि-स्वदिसाध्यशूभ्य उणित्युण् [उ० १, १]। सति शिष्टप्रत्यय-स्वरेणान्तोदात्तो वायुशब्दः। जसः सुप्त्वादनुदात्तत्वम्। जसि चेति [पा० ७, ३, १०९] गुणोऽवादेशे च स्थानेऽन्तरतम इति [पा० १, १, ५०] परिभाषया उदात्त एव जाते वायव इति मध्योदात्तं पदम्। अमः स्वरितत्वं पूर्ववत्। 'स्थ' अस्ते-र्लिटि शपो लुकि श्नसोरल्लोप इति अकारलोपः [पा० ६, ४ १११]। तिङ्ङतिङ इति [पा० ८, १, २८] निघातः॥ 'देवः' पचादित्वादच् [पा० ३, १, १३४] चित इत्यन्तोदात्तः [पा० ६, १, १६३]॥ 'वः' बहुवचनस्य वस्नसावित्यनुदात्तो वसादेशः [पा० ८, १, २१]। 'सविता' षू प्रेरणे। ण्वुल्-तृचाविति तृच् [पा० ३, १, १३३]। इडागमः। चित्त्वादन्तो-दात्तः॥ 'प्र' उपसर्गाश्चाभिवर्जमित्याद्युदात्तः [फि० ४, १२] 'अर्पयतु' ऋ गतौ। हेतुमति चेति णिच् [पा० ३, १, २६]। अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग्णाविति [पा० ७, ३, ३६]

पुक् । पुगन्तेति [ पा० ७, ३, ८६ ] गुण: निपातश्च । 'श्रेष्ठतमाय' प्रशस्यशब्दादतिशायने तमबिष्ठनाविति इष्ठन् [ पा० ५, ३, ५५ ] प्रशस्यस्य श्र [ पा० ५, ३, ६० ] इति आदेश: । नित्यादिर्नित्यमित्याद्युदात्तत्वम् [ पा० ६, १, १९७ ] । तत: पुन: तमप् । तस्य पित्त्वादनुदात्तत्वम् । स्वरितप्रचयौ पूर्ववत् ॥ 'कर्मणे' करोतेर्मनिन् नित्त्वादाद्युदात्त: ॥ 'आ' उदात्त: ॥ 'प्यायध्वम्' ओप्यायी वृद्धौ । हेतुमति णिच् [ पा० ३, १, २६ ] । तस्य छन्दस्युभयथेत्यार्धधातुकत्वात् [ पा० ३, ४, ११७ ] णेरनिटीति णिलोप: [ पा० ६, ४, ५१ ] । निघात: ॥ 'अघ्न्या:' अघ्न्या अहन्तव्या भवत्यघघ्नीति वेति यास्क: [ निरु० ११, ४३ ] । अघे नञि वोपपदे हन्तेरघ्न्यादयश्चेति [ उ० ४, ११२ ] यगन्तो निपात: । सम्बुद्धित्वादामन्त्रितस्य चेति [ पा० ६, १, १९८ ] आष्टमिको निघात: ॥ 'इन्द्राय' इदि परमैश्वर्य्ये इन्धी दीप्तौ वा । इन्दति इध्यते वा तेजोभिरिति इन्द्र: । ऋज्रेन्द्रेत्यादिना [ उ० २, २९ ] रन्प्रत्ययान्तो निपात: । नित्त्वादाद्युदात्त: । स्वरितप्रचयौ च ॥ 'भागं' भज भागसेवनयो: । अकर्त्तरि च कारके सञ्ज्ञायामिति घञ् [ पा० ३, ३, १९ ] । ञित्त्वादाद्युदात्ते प्राप्ते कर्षात्वतो घञोऽन्त उदात्त इत्यन्तोदात्तत्वम् [ पा० ६, १, १५९ ] ॥ तस्यामिपूर्वं इत्यमा [ पा० ६, १, १०७ ] सहैकादेश एकादेशोदात्तेनोदात्त इत्युदात्त एव [पा० ८, २, ५] ॥ 'प्रजावती:' उपसर्गे च सञ्ज्ञायामिति [पा० ३, २, ९९ ] जनेर्डप्रत्यय: ततष्टाप् । तेन सहैकादेशोऽप्युदात्तान्त: प्रजाशब्द: । तदस्यास्त्यस्मिन्निति मतुप् [ पा० ५, २, ९४] मादुपधायाश्च मतोर्वोऽयवादिभ्य: [ पा० ८, २, ९ ] इति मस्य व: । उगितश्चेति ङीप् [ पा० ४, १, ६ ] । मतुप्-

ङीपोरनुदात्तत्वात् प्रजाशब्दस्वर एव। वा छन्दसीति [ पा० ६, १, १०६ ] पूर्वसवर्णदीर्घत्वम्॥ 'अनमीवाः' अम रोगे। अमेरीव इति ईवप्रत्ययः। यद्वा। शेवायह्वजिह्वाग्रीवाप्वामीवा [ उ० १, १५२ ] इत्यमीवन्प्रत्ययान्तो निपातः। तस्य नञा बहुव्रीहौ [ पा० २, २, ६ ] समासस्य चेत्यन्तोदात्ते प्राप्ते [ पा० ६. १, २२३, २—१६२ ]। तदपवादेन बहुव्रीहौ प्रकृत्या पूर्वपदमिति [ पा० ६, २, १ ] पूर्वपदप्रकृतिस्वरत्वे प्राप्ते तदपवादेन नञ्सुभ्यामित्यन्तोदात्तत्वम् [ पा० ६, २, १७२ ]॥ 'अयक्ष्माः' तद्वत् स्वरः॥ 'मा' निपातत्वादाद्युदात्तः॥ 'स्तेनः' स्तेन चौर्ये। स्तेनयति चोरयतीति स्तेनः। पचाद्यच्। चित्त्वादन्तोदात्तः॥ 'ईशत' ईश ऐश्वर्ये। छन्दसि लुङ्लङ्लिट इति लङ् [ पा० ३, ४, ६ ]। व्यत्ययो बहुलमिति [ पा० ३, १, ८५ ] बहुवचनम्। न माङ्योगे इत्यडभावः [ पा० ६, ४, ७४ ]। निघातश्च॥ 'अघशंसः' अघ पापकरणे। पचाद्यजन्तोऽघशब्दोऽन्तोदात्तः। अघं शंसति इच्छतीत्यघशंसः। शंसि इच्छायाम्। अच्। तत्पुरुषे तुल्यार्थेत्यादिना [ पा० ६, २, २ ] पूर्वपदप्रकृतिस्वरत्वम्॥ 'ध्रुवाः' ध्रुव स्थैर्ये। इगुपधज्ञाप्रीकिरः क इति कः [ पा० ३, १ १३५ ]। प्रत्ययस्वरेणान्तोदात्तो ध्रुवशब्दः॥ 'अस्मिन्' इणो दमुगिति एतदमुक्। अन्तोदात्त इदंशब्दः। तस्मात् ङेरस्मिन्। तस्य ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः [ पा० ६, १, १७१ ] इत्युदात्तत्वम्॥ 'गोपतौ' गमेर्डोरिति [ उ० २, ६६ ] गोशब्दः प्रत्ययस्वरेणोदात्तः। गवां पतिरिति तत्पुरुषे पत्यावैश्वर्य्ये इति पूर्वपदप्रकृतिस्वरत्वम् [ पा० ६, २, १८ ]। स्यात्। अस्तेः प्रार्थनायां लिङ्। तस्थस्थमिपां [ पा० ३, ४, १०१ ] यासुट्। सलोपोऽल्लोपश्च। तिङ्ङतिङः॥

'बह्वीः' बहुशब्दात् वोतो गुणवचनादिति [ पा० ४, १, ४४ ] ङीष् । वा छन्दसीति [ पा० ६, १, १०६ ] जसः पूर्वसवर्णत्वम् । प्रत्ययस्वरेणान्तोदात्तः ॥ 'यजमानस्य' पुङ्यजोः शानन्निति [पा० ३, २, १२८] यजतेः शानन् । नित्त्वादाद्युदात्तः ॥ 'पशून्' पश्यन्ति गच्छेनेति पशवः । अर्जिदृशिकमीत्यादिना [ उ० १, २७ ] दृशेः कुप्रत्ययः पशादेशश्च । प्रत्ययस्वरेणान्तोदात्तः ॥ 'पाहि' पा रक्षणे । लोट् । तिङ्ङतिङः । एवमग्रे पदस्वर-प्रक्रियोहनीया विस्तरभयान्नोच्यते ॥ १ ॥

वसो॑: प॒वित्र॑मसि । द्यौर॑सि पृथि॒व्य॑सि मा॒त॒-रिश्व॑नो घ॒र्मो॑ऽसि वि॒श्वधा॑ अ॒सि॒ । प॒र॒मेण॒ धाम्ना॒ दृꣳह॑स्व॒ मा ह्वा॒र्मा ते॑ य॒ज्ञप॑तिर्ह्वार्षीत् ॥ २ ॥

का० [ ४, २, १५, १६ ] वसोः पवित्रमिति पवित्र-मस्यां बध्नाति कुशौ त्रिवृद्देति । वासयति वृष्ट्यादिद्वारा स्थापयति विश्वमिति वसुः यज्ञः । यज्ञो वै वसुर्यज्ञस्य पवित्रमसीति श्रुतेः [ १, ७, १, ९ ] । यज्ञशब्देन तदीयह-विर्द्रव्यरूपं क्षीरं लक्ष्यते । हे दर्भमय पवित्र ! 'वसोः' इन्द्र-देवताया निवासहेतोः पयसः शोधकं 'पवित्रं' त्वम् 'असि' । अनेन मन्त्रेण पवित्रं कृत्वा पर्णशाखायां बध्नीयात् । द्वौ कुशौ कुशत्रयं वा पवित्रमुच्यते ॥ का० [ ४, २, १९ ] द्यौर-सीति स्थाल्यादानमिति । यस्यां स्थाल्यां क्षीरं प्रक्षेप्तव्यं तदु-पग्रहणार्थोऽयं मन्त्रः । हे स्थालि ! मृज्जलाभ्यां निष्पन्ना त्वं 'द्यौरसि' जलहेतुवृष्टिप्रदद्युलोकरूपासि । द्युसम्बन्धात्तद्रूपत्व-मस्या उपचर्यते । तथा 'पृथिव्यसि' पृथिव्याः सकाशादुद्धृतया

मृदा निर्मितत्वात् पृथिवीरूपत्वम् ॥ का० ( ४, २, २० ] मातरिश्वन इत्यधिश्रयतीति। गार्हपत्यादुदीचोऽङ्गारान्निरुह्य तेषूखामधिश्रयति। हे उखे ! त्वं 'मातरिश्वनः' वायोः 'घर्म्मः' दीपकोऽन्तरिक्षलोकोऽसि। मातर्यन्तरिक्षे श्वसिति निश्वासचेष्टां करोतीति मातरिश्वा वायुः। घर्म्मः। घृ क्षरणदीप्त्योः। घर्म्मः दीपकः। सञ्चारस्थानप्रदानेन वायोर्दीपकोऽभिवृद्धकोऽन्तरिक्षलोकः। हे स्थालि ! तवोदरेऽप्यन्तरिक्षरूपस्याकाशस्य वायुसञ्चारस्य सद्भावात् त्वमपि वायोर्घर्म्मरूपासि ॥ द्यौरसि पृथिव्यसीति पूर्वमन्त्रे लोकद्वयरूपत्वमुखाया उक्तम्। अत्र मातरिश्वनो घर्मोऽसीत्यन्तरिक्षलोकरूपत्वमुच्यते। तस्मात्त्रयाणां लोकानां धारणात् त्वं 'विश्वधा असि' विश्वं धातीति विश्वधाः विश्वधारणसमर्थासि लोकत्रयरूपत्वात्। किञ्च 'परमेण धाम्ना' उत्तमेन बहुक्षीरधारणसामर्थ्यरूपेण तेजसा हे उखे ! त्वं "दृꣳहस्व' दृढ़ा भव त्वन्निष्ठस्य क्षीरस्य गलनं वारयितुम् अन्यथा भग्नायास्तव छिद्रेण क्षीरं गलेत्। दृहि वृहि वृद्धाविति [धा० १७, ८४] धातुर्यद्यपि वृद्धयर्थस्तथापि दार्ढ्ये सति भङ्गाभावेन चिरमवस्थानाद् दार्ढ्यं नाम कालवृद्धिरेव भवति। किञ्च। हे उखे ! 'मा ह्वाः' कुटिला मा भव। ह्वृ कौटिल्ये। यद्युखा कुटिला भवेत् तदानीमवाङ्मुखायां सत्यां तत्स्थं क्षीरं गलेत्। अतः क्षीरधारणाय दार्ढ्यमकौटिल्यं प्रार्थ्यते। किञ्च 'ते यज्ञपतिः' तत्सम्बन्धी यजमानः 'मा ह्वार्षीत्' कुटिलो मा भूत् त्वन्निष्ठक्षीरस्कन्दनेनानुष्ठानविघ्न एव यजमानस्य कौटिल्यम्। तच्च त्वदीयेन दार्ढ्येन कौटिल्याभावेन च न भविष्यतीति प्रार्थ्यते ॥ २ ॥

वसो॑ः प॒वित्र॑मसि श॒तधा॑रं॒ वसो॑ः प॒वित्र॑-

मसि सहस्रधारम्। देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुप्वा। कामधुक्षः॥३

का० [ ४, २, २१ ] 'वसोः पवित्रम्' इति पवित्रमस्यां करोत्युदग्ग्रेति। अस्यामुखायां स्थापनीयस्य पवित्रस्य प्रागग्रत्वं सामान्यतः प्राप्तमिति सिद्धवत् कृत्वोदगग्रत्वं विकल्प्यते। हे शाखापवित्र! 'वसोः' इन्द्रदेवतानिवासहेतोः पयसः शोधकं 'पवित्रं' त्वम् 'असि'। पवित्रेण व्यवधाने सति क्षीरेण सह स्यान्दं पततां तृणपर्णादीनां प्रतिबध्यमानत्वात् पवित्रस्य क्षीरशोधकत्वम्। किम्भूतं पवित्रम्? 'शतधारम्' शतसंख्याधार यस्मिन्। तथा 'सहस्रधारं' सूक्ष्मैः पवित्रच्छिद्रैः स्याद्य पतन्तीनां क्षीरधाराणां शतसहस्रसंख्याकानां सद्भावाच्छोधकत्वमाहर्तुम्। वसोः पवित्रमिति द्विरुक्तिः। अध्याये भूमावमर्थं मन्यन्ते [ निरु० १० ४१ ]॥ का० [ ४, २, २२ ] 'देवस्त्वेत्यासिच्यमाने अपतीति'। पयो देवता। दोहनादूर्ध्वं स्थाल्यां सिच्यमान हे क्षीर! 'सविता' प्रेरको देवः पूर्वोक्तरीत्या 'शतधारेण' वसोः पवित्रेण 'त्वा' त्वां 'पुनातु' शोधयतु। सुप्वेति पवित्रविशेषणं सुष्ठु पुनातीति सुपुः तेन 'सुप्वा' 'शुद्धागमाभाव आर्षः'॥ का० कामधुक्ष इति प्रश्न इति [ ४, २, २४ ] एकस्यां गवि दुग्धायां दोग्धारमध्वर्युः पृच्छेत्। हे दोग्धः! विद्यमानानां गवां मध्ये त्वं 'कां गाम्' 'अधुक्षः' दुग्धवानसि॥ ३॥

सा विश्वायुः। सा विश्वकर्मा। सा विश्वधायाः। इन्द्रस्य त्वा भागꣳ सोमेनातनच्मि विष्णो हव्यꣳ रक्ष॥ ४॥

का० [४, २, २५] प्रोक्ते सा विश्वायुरित्याहेति। पूर्वोक्त-प्रश्नस्योत्तरे अमूं गामिति दोग्ध्रा प्रोक्ते सति सा विश्वायुरिति मन्त्रेण दोग्धारमत्यध्वर्युर्ब्रूयात्। या गौस्त्वया दुग्धा मया च पृष्टा 'सा' विश्वायुःशब्देनाभिधेया। विश्वमायुर्यस्याः सा विश्वायुः। यजमानस्य सम्पूर्णम् आयुः प्रयच्छतीत्यर्थः॥ का० [४, २. २६] एवमितरे उत्तराभ्यामिति। यथा प्रथमा गौः पृष्टा एवमितरे द्वितीयतृतीये गावौ तद्दोहनादूर्द्ध्वं कामधुक्ष इति मन्त्रेण प्रष्टव्ये। दोग्धा तूत्तरेऽमूमिति प्रोक्ते सा विश्वकर्म्मा सा विश्वधाया इति मन्त्राभ्यां क्रमेण तयोराशिषं ब्रूयात्। या द्वितीया गौस्त्वया पृष्टा सा विश्वकर्म्मा या तृतीया गौस्त्वया पृष्टा सा विश्वधायाः। डुधाञ् धारणपोषणयोः। विश्वान् सर्वान् देवान् दधाति क्षीरदध्यादिहविर्दानेन पुष्णाति इति विश्वधायाः। असुन्प्रत्ययो णिच्च। णित्त्वा-दातो युक्चिण्कृतोरिति [पा० ७, ३, ३३] युक्। यद्वा। धेट् पाने। विश्वानिन्द्रादिदेवान् क्षीरादिहव्यं धापयति पाय-यतीति विश्वधायाः॥ का० [४, २, ३२] 'उद्वास्यातनक्ति प्रागघुतशेषेणेन्द्रस्य त्वेति। क्वथितं क्षीरमग्नेरुद्वास्य मन्त्रेण तत्र प्रातःकालीनहोमावशिष्टेन दध्ना दधिनिष्पत्तये आत-ञ्चनं कुर्य्यात्। हे क्षीर! 'इन्द्रस्य भागं त्वां 'सोमेन' सोमवल्लीरसेन 'आतनच्मि' दध्यर्थं कठिनीकरोमि। तञ्चतिः कठिनीकरणार्थः। यद्यप्यातञ्चनहेतुर्दधिशेषस्त-थापि भावनया तस्यैव सोमत्वं सम्पाद्यते। यथा कश्चित् पुमान् बन्धुत्वेन भावितो बन्धुर्भवति प्रातिकूल्येन भावितः शत्रुश्च। तदुक्तं वशिष्ठेन—'बन्धुत्वे भावितो बन्धुः परत्वे भावितः परः। विषामृतद्दशेवेह स्थितिर्भावनिबन्धिनीति। भोज्यं वा विषत्वेन भावितं वान्तिं करोति। अमृतत्वेन

भावितं चौर्यं सवलहेतुर्भवति। तथात्र दधिग्रीवस्य भावनया सोमत्वम् ॥ का० [ ४, २, १४ ] 'सोदकेनापि दधात्यनेनप्नयेन विष्णो हव्यमितीति। हे 'विष्णो' इदं 'हव्यं' चौरं 'रक्ष'। सर्वत्र सृष्टौ पालने संहारे च ब्रह्मविष्णुमहेश्वराअभिमानिन्यो देवताः। अतो विष्णुं सम्बोध्य हविषो रक्षा प्रार्थ्यते ॥ ४ ॥

अग्ने॑ व्रतपते व्रतञ्च॑रिष्यामि तच्छ॑केयं॒ तन्मे॑ राध्यताम् । इ॒दम॒हमनृ॑तात्स॒त्यमुपै॑मि ॥ ५ ॥

का० [ २, १, ११ ] अपरेणाहवनीयं प्राङ्मि[illegible]मो अमाणोऽप उपस्पृश्य व्रतमुपैत्यग्ने व्रतपत इदमहमितिवेति। हे व्रतपते! व्रतस्यानुष्ठेयस्य कर्मणः पते पालक! हे अग्ने! त्वदनुज्ञया व्रतं चरिष्यामि कर्मानुष्ठास्यामि। 'तत् शकेयम्' तत्कर्मानुष्ठातुं शक्तो भूयासं त्वत्प्रसादात्। 'तन्मे राध्यतां' मदीयं तत्कर्म निर्विघ्नं सत् फलपर्यन्तं सिध्यतु। शकेराशीर्लिङ्यासुट्। लिङ्याशिष्यङ् [ पा० ३, १, ८६ ] अतो येयः [ पा० ७, २, ८० ] गुणः शकेयम्। अग्निर्वै देवानां व्रतपतिरिति श्रुतिः [ १, १, १, २ ]॥ इदमहम्॥ 'अहं' यजमानोऽस्मादनृतान्मनुष्यजन्मन उद्धृत्य 'सत्यं' देवताशरीरम् 'उपैमि' प्राप्नोमि। सत्यमनुष्ठीयमानकर्मरूपेण प्रत्यक्षमिति मन्वान इदमिति विशिनष्टि। अनृतं मनुष्यजन्म शीघ्रविनाशित्वात्। यथा स्वप्नगजादयो बोधमात्रेण शीघ्रं निवर्त्तमाना अनृता उच्यन्ते। सत्यं देवजन्म बहुकालस्थायित्वात्। यथा जागरणगजादयः। श्रुतिरपि [ १, १, १, ४ ] इदमहमनृतात्सत्यमुपैमीति तन्मनुष्येभ्यो देवानुपावर्तत इति। यद्वा लोकप्रसिद्धे एव सत्यानृते ग्राह्ये। नानृतं वदेदिति

कर्मैतदनृतमित्येवार्थः । अनृतवदनात् व्रत्याह्यामेदं सत्यवदनमुपैमि । अत इदं सत्यवदनं कर्म त्वमेवाद्य पालनीयम् ॥ ५ ॥

कस्त्वा युनक्ति स त्वा युनक्ति कस्मै त्वा युनक्ति तस्मै त्वा युनक्ति । कर्मणे वां वेषाय वाम् ॥ ६ ॥

एवं व्रतमुपेत्य ब्रह्मार्थं हत्वापां प्रणयनं कुर्यात् । का० [२,२,२,३] ब्रह्मन्नपः प्रणेष्यामि यजमान वाचं यच्छेत्याह्वानुज्ञात उत्तरेणाहवनीयं सम्भृति निदधाति कस्त्वा युनक्तीति ॥ अत मन्त्रं ब्रह्मुज्ञानोऽध्वर्युर्यवारभ्य कर्मण्याह्वनः कर्तृत्वमपनीय प्रजापतेर्दशनार्थं स्वं प्रश्नोत्तररूपाभ्यां मन्त्रवाक्याभ्यां प्रतिपादयति । प्रणीतानामपां धारक हे पात्र ! त्वां कः पुरुषो युनक्ति आहवनीयस्योत्तरभागे स्थापयतीति प्रश्नः । तत्क्रूपः प्रसिद्धार्थवाची । सर्वेषु वेदेषु जगन्निर्वाहकत्वेन प्रसिद्धो यः प्रजापतिरस्ति 'सः' एव परमेश्वरः हे पात्र 'त्वा युनक्ति'—इत्युत्तरम् । पुनरपि 'कस्मै' प्रयोजनाय 'त्वा युनक्ति'—इति प्रश्नः । 'तस्मै' प्रजापतये तत्प्रीत्यर्थं 'त्वा युनक्ति'—इत्युत्तरम् । सर्वकर्माणि परमेश्वरप्रीत्यर्थमनुष्ठेयानीति भगवद्गीतास्वर्जुनं प्रति भगवतोक्तम् [ भ० गी० १८, ५६—८, २७ इति च । ७, १४ मीति च ॥ परिस्तीर्य इध्मयः पात्राण्यासाद्य शूर्पं चाग्निहोत्रहवणीं चादत्ते । का० [ २, ३, १० ] कर्मणे वामिति शूर्पाग्नि [illegible] वच्चादायेति ॥ 'कर्मणे' हे अग्निहोत्रहवणि ! हे शूर्प ! वां युवां कर्मार्थमहमाददे इति शेषः । 'वेषाय' च । विच्लृ व्याप्तौ । घञ् । वेषो व्याप्तिः । सुचिरकर्मसु व्याप्त्यर्थं च 'वां' युवामहमाददे । शकटेऽवस्थितानां व्रीहीणां

हविरर्थं पृथक्करणं प्रेक्षणार्थोदकधारणमित्यादयोऽग्निहोत्रहवणीव्यापाराः। व्रीहिनिर्वापधारणमुलूखले व्रीहिप्रक्षेपः पुनरुद्धरणं चेत्यादयः शूर्पव्यापाराः ॥ ६ ॥

प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयः। निष्टप्तꣳ रक्षो निष्टप्ता अरातयः। उर्वन्तरिक्षमन्वेमि ॥ ७ ॥

का० [ २, ३, ११ ] प्रतपनं प्रत्युष्टं निष्टप्तमिति वेति। 'रक्षः' राक्षसजातिः। 'प्रत्युष्टं' प्रत्येकं दग्धम्। उष दाहे। अनेनाग्निहोत्रहवणीशूर्पयोः प्रतपनेनात्र स्थिता राक्षसा दग्धा इत्यर्थः। अरातयोऽपि प्रत्युष्टाः प्रत्येकं दग्धाः। रा दाने। हविषो दक्षिणाया वा दानं रातिः। रातेः प्रतिबन्धका अरातयस्तेऽपि दग्धा अन्यथा न यज्ञसाधनमित्यर्थः। शूर्पादौ निगूढं 'रक्षो निष्टप्तं' निःशेषेण तप्तं सन्तप्तम्। तप सन्तापे। 'अरातयः' च निष्टप्ताः। अनयोर्मन्त्रयोर्विकल्पः ॥ का० गच्छत्युर्वन्तरिक्षमितीति। 'उरु' विस्तीर्णम् 'अन्तरिक्षम्' अवकाशम् 'अन्वेमि' अनुसृत्य गच्छामि। गच्छतः पुरुषस्य पार्श्वयोरेव स्थितं रक्षोऽनेन मन्त्रेण निराक्रियते इत्याशयः ॥७॥

धूरसि धूर्व धूर्वन्तं धूर्व तं योऽस्मान् धूर्वति तं धूर्व यं वयं धूर्वामः। देवानामसि वह्नितमꣳ सस्नितमं पप्रितमं जुष्टतमं देवहूतमम् ॥ ८ ॥

का० [ २, ३, १२, १३ ] अपणस्य पश्चादनस्थितस्य समर्ह

धूरसीति धुरभिमर्शनमिति। अस्यायमर्थः—'अपरस्य पुरो-डाशपाकहेतोर्गार्हपत्यस्य पश्चादनः शकटं व्रीहियुक्तं तिष्ठति। तच्च समङ्गि सम्यगङ्गानि यस्य तत् सर्वाङ्गोपेतं तस्य 'धुरं' बलीवर्दवनयोग्यं युगप्रदेशं धूरसीति मन्त्रेण स्पृशेदिति॥ अथ मन्त्रार्थः—व्रीहिरूपहविर्धारकशकटसम्बन्धिनो युगस्य बलीवर्दवहनप्रदेशे कश्चिद्धिंसकोऽग्निः शास्त्रदृष्टोऽस्ति तं प्रार्थयते। अग्निर्वा एष धुर्यस्तमेतदत्येष्यन् भवतीति श्रुतेः [१, १, २, १०] हे वह्ने! त्वं धूरसि हिंसकोऽसि। तुर्वीथुर्वीदुर्वीधुर्वी हिंसार्थाः धूर्वतेः क्विप्। यतो धूरसि अतः 'धूर्वन्तं' हिंसन्तं पाप्मानं 'धूर्व' विनाशय। किञ्च 'यः' राक्षसादिर्यागविघ्नेन 'अस्मान्' धूर्वति हिंसितुमुद्युक्तस्तमपि 'धूर्व' विनाशय 'यं' च 'वयं' 'धूर्वामः' तमपि 'धूर्व' यमालस्यादिरूपं वैरिणं वयमनुष्ठातारो धूर्वामो हिंसितुमुद्यतास्तमपि धूर्व विनाशय। शकटस्थिताग्न्यतिक्रमण-निमित्तमपराधमपक्रोतुमग्न्याधारभूता शकटस्य धूरनेन मन्त्रेण स्पृश्यते॥ का० [२, ३, १४] देवानामित्युपस्तम्भनस्य पश्चादीषामिति। शकटस्य दीर्घं काष्ठमीषा तदग्रस्य भूमिस्पर्शो मा भूदिति॥ तदाधारत्वेन स्थापितं काष्ठमुपस्तम्भनं तस्य पश्चाद्भागे तामीषां स्पृशेत्। देवानामसि। हे शकट! त्वं "देवानां" सम्बन्धि "असि" भवसि। किम्भूतं? 'वह्नितमम्' वह प्रापणे। वहतीति वह्निः अतिशयेन वह्नि वह्नितमम्। व्रीहिरूपस्य हविषोऽतिशयेन प्रापकम्। तथा "सस्नितमं" ष्णा शौचे। अतिशयेन शुद्धम्। आदृगमेत्यादिना [पा० ३, २, १७१] किप्रत्ययः। यद्वा। स्नै वेष्टने। दार्ढ्याय चर्मादिभिरतिशयेन वेष्टितम्। 'पप्रितमम्'। प्रा पूरणे। व्रीहिभिरतिशयेन पूरितम्। 'जुष्टतमं' जुषी प्रीतिसेवनयोः। देवानामतिशयेन प्रियम्।

'देवहूतमम्'। ह्वेञ् स्पर्धायां शब्दे च। देवानामतिशयेनाह्वातृ। व्रीहिपूर्णं शकटं दृष्ट्वा देवा आहूता इव शीघ्रमागच्छन्ति ॥ ८ ॥

अह्रु॑तमसि हवि॒र्धानं॒ दृꣳह॑स्व॒ मा ह्वा॒र्मा ते॑ य॒ज्ञप॑तिर्ह्वार्षीत्। विष्णु॑स्त्वा क्रमताम्। उ॒रु वाता॑य। अप॑हत॒ꣳ रक्षः॒ यच्छ॑न्तां॒ पञ्च॑ ॥९॥

अह्रुतमसि ह्रु कौटिल्ये। क्तप्रत्ययः। ह्रु ह्वरेश्छन्दसीति [ पा० ७, २, ३१ ] निष्ठायां ह्रु आदेशः। "अह्रुतम्" अकुटिलम् "असि"। आरोहणेऽपि भङ्गभीतिर्नास्तीत्यर्थः। "हविर्धानम्" डुधाञ् धारणपोषणयोः। हविषो व्रीहिरूपस्य धारकं पोषकं भवसि। अतः "दृंहस्व" मा ह्वार्मा ते यज्ञपतिर्ह्वार्षीदिति पूर्ववद् व्याख्येयम्। का० [ २, ३, १५ ] विष्णुस्त्वेत्यारोहणमिति। हे शकट! "विष्णुः" व्यापको यज्ञः 'त्वा' त्वां "क्रमतां" पादेनाक्रम्यारोहतु नाहं समर्थ इति भावः। का० [ २, ३, १६ ] प्रेक्षत उरु वातायेति हविष्यानीति। हे शकट! "वाताय" "उरु" भवेति शेषः। तदन्तर्वर्तिव्रीहिषु वायुसञ्चाराय विस्तीर्णं भव। शकटस्य व्रीहीणां तृणाद्याच्छादितत्वात् सङ्कोचे वायुप्रवेशाभावादाच्छादनमपनीय यथा वायुः प्रविशति तथा सङ्कोचं परित्यजेत्यर्थः। वायुरूपप्राणप्रवेशाद्धविः सप्राणं क्रियते मन्त्रेण। किञ्च। वायुप्रवेशरहितं सर्वं वस्तु वरुणदेवत्यं भवति। वरुणस्य बन्धकारित्वाद् यज्ञनिरोधकत्वनिवृत्त्यर्थमयं मन्त्रः। यद्वै किञ्च वातो नाभिभवति तत्सर्वं वरुणदेवत्यमुरु वातायेत्याह वारुणमेवैतत् करोतीति तित्तिरिवचनात्। का० ] २, ३, ११, १८ ] 'अपहतमिति निरस्यत्यन्यदविद्यमानेऽभिमृशे-

दिति। व्रीहिभ्योऽन्यत्तृणादिकं यदि तत्र भवेत्तदनेन निरस्येत् तृणाद्यभावे व्रीहीनभिमृशेदिति सूत्रार्थः। अथ मन्त्रार्थः —'रक्षः' यज्ञविघातकम् 'अपहतं' निराकृतं तृणादिकमेव रक्ष उच्यते॥ का० [२, ३, १८] 'यच्छन्तामित्यालभते इति। 'पञ्च' पञ्चसङ्ख्याका अङ्गुलयो व्रीहिरूपं हविः 'यच्छन्तां' नियच्छन्तु। अनेन पञ्चाङ्गुलियुक्तेन मुष्टिना व्रीहीन् गृह्णीयादित्यर्थ उक्तो भवति॥ ९॥

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्। अग्नये जुष्टं गृह्णामि। अग्नीषोमाभ्यां जुष्टं गृह्णामि॥ १०॥

का० [२, ३. २०—२२] देवस्य त्वेति गृह्णात्याग्नेयं चतुरो मुष्टीनेवमग्नीषोमीयं यथादेवतमन्यदिति। हे हविः! 'सवितुर्देवस्य' 'प्रसवे' प्रेरणे सति तेन प्रेरितोऽहम् 'अग्नये' 'जुष्टं' प्रियं 'त्वा' 'गृह्णामि'। 'अग्नीषोमाभ्यां' व्यासक्तदेवताभ्यां च 'जुष्टं' त्वा 'गृह्णामि'। काभ्याम् 'अश्विनोर्बाहुभ्यां' 'पूष्णो हस्ताभ्यां' च। अंसमणिबन्धयोर्मध्यभागो दीर्घदण्डाकारो बाहुः। पञ्चाङ्गुलियुक्ताग्रभागो हस्तः। अश्विनौ हि देवानामध्वर्यू पूषा हि देवानां भागधुक्। अतो ग्रहणसाधनयोः स्वबाह्वोरश्विबाहुभावना कार्या। हस्तयोस्तु पूषहस्तभावनेति भावः। सर्वात्मकस्याग्नेर्हविस्तादृशं मनुष्येण कथं ग्रहीतुं शक्यमिति सवित्रानुज्ञातोऽश्विबाहुभ्यां पूष्णो हस्ताभ्यां गृह्णामीत्यर्थः। किञ्च। सत्यं देवा अनृतं मनुष्या इति श्रुतेः [ १, १, २, १७ ] देवानां सत्यरूपत्वात् तदनुस्मृतिपूर्वकं हविर्ग्रहणम् फलपर्यवसायित्वात्सत्यं भवति। देवतास्मृत्यभावे तु मनुष्याणामनृतरूपत्वात्तत्कृतमनुष्ठानं निष्फलत्वादनृतं भवतीति देवतास्मरणमि-

त्वमिप्राय:। हविरेतन्मधवशुं देवता: सेवन्ते मम नाम गृहीष्यतीति। अनामयन्हं हविषि गृह्णीते तासां मिथ: कलही भवेदिदं मदर्थमेव गृहीतमिति तत्कलहनिवृत्त्यर्थमग्नये जुष्टमग्नीषोमाभ्यां जुष्टमिति देवतानिर्देशपूर्वकं हविर्ग्रहणमित्यभिप्राय: ॥ १० ॥

भूताय॑ त्वा नारा॑तये। स्व॑रभिविख्ये॑षम्। दृꣳह॑न्तां॒ दुर्य्या॑: पृथि॒व्याम्। उ॒र्व॑न्तरि॑क्ष॒मन्वे॑मि। पृथि॒व्यास्त्वा॒ नाभौ॑ सादया॒म्यदि॑त्या उ॒पस्थेऽग्ने॑ ह॒व्यꣳ र॑क्ष ॥ ११ ॥

का० [ २, ३, २३ ] भूताय त्वेति शेषाभिमर्शनमिति। हे व्रीहिशेष शकटावस्थित 'भूताय' भवनाय यागान्तराणां ब्राह्मणभोजनस्य च पुनरपि सद्भावाय 'त्वा' त्वां संपरिशेषयामीति शेष:। 'न' 'अरातये' अदानाय शेषयामि। का० [२, ३, २४] स्वरिति प्राङीक्षते इति। अहं 'स्व: अभिविख्येषं' यज्ञं पश्येयं 'यज्ञो वै स्वरहर्देवा: सूर्य्य:' इति श्रुते: [ १, १, २, २१ ]। यज्ञदिवसदेवसूर्य्या: स्व:शब्देनोच्यन्ते। स्वर्गहेतुत्वादपि स्व:शब्देन यज्ञ:। ख्या प्रकथने। 'अभिविख्येषम्' अभितो विशेषेण ख्यापयेयं पश्येयमित्यर्थ:। अनेन मन्त्रेण प्राङ्मुखो यज्ञभूमिं वीक्षते ॥ का० [ २, ३, २५ ] 'दृꣳहन्तामित्यवरोहतीति। 'पृथिव्यां' वर्त्तमाना: 'दुर्य्या:' गृहा: 'दृꣳहन्तां' दृढा भवन्तु। अनेन मन्त्रेण शकटात् अवरोहयेत्। दुरो द्वाराण्यर्हन्तीति दुर्य्या: गृहा:। हवि:र्गृहीत्वोत्तरतोऽध्वर्य्योर्भारेण गृहक्षोभ: सम्भाव्यते सोऽनेन मन्त्रेण वार्य्यते। का० [ २, ३, २६ ] गच्छत्युर्वन्तरिक्षमिति। व्याख्यातम्।

का० [ २, १, २७ ] अपघस्य पत्र तृणादयति पृथिव्या- स्त्वेति। हे हविः 'पृथिव्या नाभौ' मध्ये 'त्वां' 'सादयामि' स्थापयामि। तस्यैव व्याख्यानम्। अदित्या उपस्थ इति। उपस्थेऽङ्के यथा सुप्तं बालं पुत्रं माता स्वाङ्के स्थापयति'। एवमिदं हविः अदित्या उपस्थे भूम्या अङ्के 'सादयामि। हे 'अग्ने' तव समीपे स्थापितमिदं 'हव्यं' त्वं 'रक्ष'। सुप्तं पुत्रमिव बाधकेभ्यः पालय ॥ ११ ॥

पवित्रे स्थो वैष्णव्यौ। सवितुर्वः प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः। देवीरापो अग्रेगुवो अग्रेपुवोऽग्र इममद्य यज्ञं नयताग्रे यज्ञपतिꣳ सुधातुं यज्ञपतिं देवयुवम् ॥ १२ ॥

का० [ २, ३, ३२ ] कुशौ समावप्रच्छिन्नाग्रावनन्तर्गर्भौ कुशैः छिनत्ति पवित्रे स्थ इति त्रीन्वेति। वैष्णवे इति प्राप्ते व्यत्ययो बहुलमिति [ पा० ३, १, ८५ ] स्त्रीत्वम्। हे 'पवित्रे' शोधके कुशद्वयरूपे! युवां 'वैष्णव्यौ' यज्ञसम्बन्धिनी 'स्थः' भवथः यज्ञो वै विष्णुर्यज्ञिये स्थ इति श्रुतेः [ १, १, ३, १ ]। का० [ २, ३, ३३ ] हविर्ग्रहण्यामपः कृत्वा ताभ्यामुत्पुनाति सवितुर्व इतीति। 'सवितुः' प्रेरकस्य 'प्रसवे' प्रेरणे सति हे 'आपः' 'वः' युष्मान् 'उत्पुनामि' उत्कर्षेण शोधयामि। केन 'अच्छिद्रेण' छिद्ररहितेन 'पवित्रेण' शोधकेन वायुरूपेण। यो वा अयं पवत एषोऽच्छिद्रं पवित्रमिति श्रुतेः [ १, १, ३, ६ ]। 'सूर्य्यस्य रश्मिभिः' शुद्धिहेतुभिरुत्पुनामीति सम्बन्धः। वायोः सूर्य्यरश्मीनाञ्च पादप्रक्षालनाद्युपहतभूमिशुद्धिहेतुत्वं

प्रसिद्धम् । का० [ २, ३, ३५ ] सव्ये कृत्वा दक्षिणेनोदिङ्गयति देवीराप इतीति । उत्पूताभिरद्भिः पूरितामग्निहोत्रहवणीं सव्यहस्ते स्थापयित्वा मन्त्रमुच्चारयन् दक्षिणहस्तेनोर्द्धं चालये-दिति सूत्रार्थः । मन्त्रार्थस्तु—हे 'देवीः आपः' द्योतनात्मिका आपो यूयम् 'अद्य' अस्मिन् दिने 'इमम्' इदानीं प्रवर्त्तमानं यज्ञम् 'अग्रे' 'नयत' पुरतः प्रवर्त्तयत निर्विघ्नं समापयत । किम्भूताः आपः अग्रेगुवः' अग्रे गच्छन्ति इत्यग्रेगुवः पुरतो निम्नदेशं प्रति गमनशीलाः । तथा 'अग्रेपुवः' अग्रे पुनन्ति अग्रेपुवः अग्रे यस्मिन् पूर्वभागे गच्छन्ति तस्मिन्नपहतिनिवा-रणेन शोधनशीलाः । यद्वा । अग्रे पिबन्तीत्यग्रेपुवः । प्रथमं सोमरसस्य पानकर्त्त्र्यः । गमेः क्विप्प्रत्यये गमः क्वावित्यनु-नासिकलोपे [ पा० ६, ४, ४० ] पुनातेः पिबतेर्वा क्वौ ऊङ् च गमादीनामित्यूकारः [ पा० क० ६, ४, ४० वा० २ ] किञ्च 'यज्ञपतिं' यजमानमग्रे नयतेत्यनुवर्त्तते । फलभोगाय प्रेर-यत । कथम्भूतम् 'सुधातुम्' सुष्ठु दक्षिणादिना दधाति यज्ञं पुष्णातीति सुधातुस्तं यज्ञस्य पतिं पालयितारम् । एको यज्ञ-पतिशब्दो योगेन व्याख्येय एको रूढ्या । तथा "देवयुवम्" । यु मिश्रणे । देवान् यौति यज्ञादिना मिश्रीकरोति देवयुस्तम् । क्विप् । अनित्यमागमशासनमिति तुगभावः । यद्वा देवान् कामयते इति देवयुस्तम् । 'इदंयुरिदं कामयमान' इति यास्कोक्तेः [ निरु० ६, ३१ ] सुप आत्मनः क्यजिति क्यच् [ पा० ३, १, ८ ] क्यचि चेतीत्वे [ पा० ७, ४, ३३ ] प्राप्ते न च्छन्दस्यपुत्रस्येति [पा० ७, ४, ३५] ईत्वाभावः । अश्वाघस्यादिति [ पा० ७, ४, ३७ ] अश्वाघयोरेवात्वविधानादकृत्सार्वधातुकयो-रिति [ पा० ७, ४, २५ ] प्राप्तो दीर्घो न भवति । ततः क्याच्छन्दसीति [ पा० ३, २, १७० ] उप्रत्ययः । देवयुशब्द-

स्वामि परेऽमि पूर्वं इति [पा० ६, १, १०७] प्राप्तस्य पूर्वरूपस्य वा छन्दसि [पा० ६, १, १०६] विकल्पेन तन्वादीनां वा इयङ्डुवङाविल्युवङ् [पा० का० ६, ४, ६८ वा० १] ॥ १२ ॥

युष्मा इन्द्रोऽवृणीत वृत्रतूर्य्ये यूयमिन्द्रमवृणीध्वं वृत्रतूर्य्ये प्रोक्षिता स्थ। अग्नये त्वा जुष्टं प्रोक्षामि। अग्नीषोमाभ्यां त्वा जुष्टं प्रोक्षामि। दैव्याय कर्मणे शुन्धध्वं देवयज्यायै यद्वोऽशुद्धाः पराजघ्नुरिदं वस्तच्छुन्धामि ॥ १३ ॥

हे आपः! 'इन्द्रः' देवः 'वृत्रतूर्य्ये' तूर्य्यतिर्वधकर्मा। वृत्रवधे निमित्तभूते सति 'युष्माः' युष्मान् 'अवृणीत'। आकारश्छान्दसः। सहकारित्वेन प्रार्थितवान्। 'यूयम्' अपि 'वृत्रतूर्य्ये' निमित्ते तम् 'इन्द्रम्' 'अवृणीध्व' वृतवत्यः सहकारित्वेन। का० [२, ३, २६] प्रोक्षिता स्थेति तासां प्रोक्षणमिति। हे आपः! यूयं 'प्रोक्षिताः' भवथ। असंस्कृता अन्यसंस्कारक्षमा न भवन्तीति। का० [२, ३, २७, २८] 'हविरासादग्नये त्वाग्नीषोमाभ्यां त्वेति यथा देवतमन्यदिति। अन्यदपि हविस्तद्देवतोच्चारेण प्रोक्षणीयम्। अग्नये त्वां जुष्टं प्रोक्षामि। अग्नीषोमाभ्यां जुष्टं त्वां प्रोक्षामि। का० [२, ३, २९] पात्राणि दैव्यायेति। कृष्णाजिनोलूखलादीनि पात्राणि प्रोक्षयेत्। हे यज्ञपात्राणि! यूयं 'शुन्धध्वम्' शुद्धानि भवत। किमर्थम् 'दैव्याय कर्मणे' अग्न्यादिदेवतासम्बन्धिने कर्मणे। तदेव कर्म विशिष्यते। 'देवयज्यायै' देवसम्बन्धिन्यै यागक्रियायै दर्शादिकायै। किञ्च। 'यद्वः' नीचजातयस्तक्षादयः

'वः' युष्माकं सम्बन्धि यदङ्गं 'पराजघ्नुः' पराहतं कृतवन्तः। छेदनतक्षणादिकाले स्वकीयहस्तस्पर्शरूपमशुचित्वं चक्रुः। 'तदिदं' 'वः' युष्माकमङ्गं 'शुन्धामि' प्रोक्षणेन शुद्धं करोमि ॥ १३ ॥

शर्मा॑सि। अव॑धूत॒ᳪ रक्षोऽव॑धूता॒ अरा॑तयः। अदि॑त्या॒स्त्वग॑सि॒ प्रति॒ त्वादि॑ति॒र्वे॑त्तु। अद्रि॑रसि वानस्प॒त्यः। ग्रावा॑सि पृ॒थुबु॑ध्न॒: प्रति॒ त्वादि॑त्या॒स्त्वग्वे॑त्तु ॥ १४ ॥

का० [ २, ४, १ ] शर्मासीति कृष्णाजिनादानमिति। हे कृष्णाजिन! त्वमुलूखलस्य धारणार्थं 'शर्म' सुखहेतुरसि। अजिनस्य चर्मेति मानुषं नाम शर्मेति दैवं नाम। का० [ २, २, २ ] अपित्य पात्रेभ्योऽवधूनोत्यवधूतमितीति। 'रक्षः' कृष्णाजिने गूढम् 'अवधूतम्'। कृष्णाजिनकम्पनेन भूमौ पातितम् एवमरातयोऽपि पातिताः। का० [ २, ४, ३, ] प्रत्यग्ग्रीवमास्तृणात्यदित्यास्त्वगितीति। हे कृष्णाजिन! त्वम् 'अदित्याः' भूमिदेवतायास्त्वग्रूपम् असि। ततोऽदितिर्भूमिस्त्वा त्वां प्रति वेत्तु प्रतिगृह्य मदीयेयं त्वगिति वेत्तु जानातु। पुरा यज्ञो देवेषु रुष्टः कृष्णमृगो भूत्वागमत्तदा देवा ज्ञात्वा तदीयां त्वचमुत्क्षिप्य जगृहुस्तस्माच्चर्मास्तरणमित्यभिप्रायः श्रुतावाम्नातः [ १, १, ४, १, ]। का० [ २, ४, ४, ५ ] सव्याशून्ये निदधात्युलूखलमद्रिरसि ग्रावासीति वा प्रति त्वेत्युभयोरिति। विकल्पितयोर्मन्त्रयोः प्रति त्वेति शेषो योजनीयः। हे उलूखल! त्वं यद्यपि 'वानस्पत्यः' दारुमयस्तथापि दृढत्वात् 'अद्रिरसि' पाषाणोऽसि। किम्भूतः

'पृथुबुध्नः' स्थूलमूलः। मूसलघातोपद्रवेण चाञ्चल्यराहित्याय मूलस्थूलत्वम्। हे उलूखल! तथाविधस्त्वं 'ग्रावासि' दार्ढ्येन पाषाणसदृशोऽसि। 'अदित्यास्त्वक्' अधस्तादास्तीर्णा कृष्णाजिनरूपा भूमेर्या त्वगस्ति सा त्वां 'प्रति वेत्तु' स्वकीयत्वेन जानातु॥ १४॥

अ॒ग्नेस्त॒नूर॑सि वा॒चो वि॒सर्ज॑नं॒ दे॒ववी॑तये त्वा गृह्णामि। बृ॒हद्ग्रा॑वासि वानस्प॒त्यः। स इ॒दं दे॒वेभ्यो॑ ह॒विः श॑मीष्व सु॒शमि॑ शमीष्व। हवि॑ष्कृ॒देहि॒ हवि॑ष्कृ॒देहि॒ हवि॑ष्कृ॒देहि॑॥ १५॥

का० [२, ४, ६,] हविरावपत्यग्नेस्तनूरसीतीति। हे हविः! त्वं 'अग्नेः' आहवनीयस्य 'तनूः' शरीरमसि। यतस्तत्र क्षिप्तं हविरग्नीभवति। अतो हविः अग्नेस्तनूः। किम्भूतं हविः। 'वाचो विसर्जनम्' अपां प्रणयनकाले नियमिताया यजमानवाचो हविरावपनकाले विसर्गो भवति। तस्मादिदं हविर्वाचो विसर्जनम्। अतः 'देववीतये' देवानां तर्पणाय 'त्वा' त्वां 'गृह्णामि' आवपामीत्यर्थः। का० [२, ४, ११] बृहद्ग्रावेति मुसलमादत्त इति। हे मुसल! त्वं यद्यपि 'वानस्पत्यः' दारुमयस्तथापि 'ग्रावासि' दार्ढ्येन पाषाणसदृशोऽसि। तथा दीर्घत्वेन बृहन्महानसि। का० [२, ४, १२] स इदमित्यवदधातीति। हे मुसल! त्वं 'देवेभ्यः' अग्न्यादिदेवोपकारार्थम् 'इदं' हविर्व्रीहिरूपं 'शमीष्व' शमय। भक्षणविरोधितुषापनयनेन शान्तं कुरु। तस्यैव पदस्य व्याख्यानम्। 'सुशमि शमीष्व' सुष्ठु शान्तं यथा भवति तथा शमीष्व शमय। शमु उपशमे व्यत्ययेन श्यो

लुक् । लुकस्तुशब्दयम: सार्वधातुक इति ईडागम: [ पा० ७, ३, ९५ ] । भान्तिर्हि द्विधा । वाह्यतुषापनयनादाद्या । सा प्रथमावघातेन स्यात् । अन्त:स्थितमालिन्यस्यापनयनादन्या । सा फलीकरणेन भवति । तं द्विविधं तण्डुलसंस्कारं कुर्वित्यर्थ: । का० [ २, ४, १३ ] हविष्कृदेहीति त्रिराह्वयतीति । यजमान: पत्नी वान्यो वा यो व्रीहीनवहन्ति स सम्बोध्याहूयते । हे 'हविष्कृत्' हवि: करोतीति हविष्कृत् 'एहि' अत्रागच्छ । त्रिवारमुक्तमर्थं देवा मन्यन्त इति त्रिराह्वानम् ॥ १५ ॥

कुक्कुटोऽसि मधुजिह्व इषमूर्जमावद त्वया वयꣳ सङ्घातꣳसङ्घातं जेष्म । वर्षवृद्धमसि । प्रति त्वा वर्षवृद्धं वेत्तु । परापूतꣳ रक्ष: परापूता अरातय: । अपहतꣳ रक्ष: । वायुर्वो विविनक्तु । देवो व: सविता हिरण्यपाणि: प्रतिगृभ्णात्वच्छिद्रेण पाणिना ॥ १६ ॥

का० [ २, ४, १५ ] आहन्त्यन्यो दृषदुपले कुक्कुटोऽसीति त्रि: शम्यया द्विष्टपदं सकृदुपलमिति । हे शम्यारूप ! यज्ञायुधविशेष ! त्वं 'कुक्कुटोऽसि' असुराणां "मधुजिह्व:" चासि देवानाम् । असुरा: क्व क्वेति तान् हन्तुमिच्छन् योऽटति सर्वत्र सञ्चरति स कुक्कुट: । यद्वा कुकं कुत्सितशब्दं कुटति तनोतीति कुक्कुट: । यद्वा कुक्कुटाख्यपक्षिवत् ध्वनिविशेषमसुरभीत्यर्थं तनोतीति कुक्कुट इत्युपचर्य्यते । मधुजिह्वकनामा कश्चिद्देवानां भृत्य: । मधुर्मधुरभाषिणी जिह्वा यस्य । तद्रूप हे यज्ञायुध ! त्वमसुरान् पराभवन् यजमानस्य 'इषमूर्जमावद' । अन्नं रसञ्च यथा समागच्छति तथा शब्दं कुरु । तव शब्देनासुरेषु

पराभूतेषु तदीयमन्नं रसञ्च यजमानः प्राप्नोति। ततः 'त्वया' कृत्वा 'वयं सङ्घातं सङ्घातं' 'जेष्म' असुरैः सह क्रियमाणं तं तं संग्रामं जेष्म जयेम। कदाचिदपि-पराजयोऽस्माकं माभूदित्यर्थः। सम्यक् हन्यन्ते असुरा यत्रेति सङ्घातो युद्धम्। मनो राज्ञ एको वृषभ आसीत्तस्मिन्नसुरघ्नी वाक् स्थिता तस्मिन् शब्दं कुर्वति तं श्रुत्वैवासुरा म्रियन्ते। ततः किलाताकुलीनामानावसुरयाजकौ मनुं गत्वा तेनैव ऋषभेणायाजयतामृषभे हते सा वाङ्मनोर्जायां प्रविष्टा। तौ पुनस्तयापि मनुमयाजयताम्। ततः सा वाग्यज्ञपात्राणि प्रविष्टेत्यसुरपराभवाय तद्वाक्प्रकटनार्थं शम्यया दृषदुपलहननमिति श्रुत्योक्तोऽभिप्रायः [१, १, ४, १४]। का० [२, ४, १६] वर्षवृद्धमसीति शूर्पमादत्त इति। हे शूर्प! त्वं 'वर्षवृद्धमसि' वर्षेण वृष्ट्या तद्भूतजलेन वृद्धं वर्षवृद्धम्। वर्षवृद्धवेणुशलाकानिर्मितत्वात् शूर्पस्य वर्षवृद्धत्वम्। का० [२, ४, १७] प्रति त्वेति हविरुद्वपतीति। हे हविः! 'वर्षवृद्धं' शूर्पं 'त्वा' त्वां 'प्रतिवेत्तु' स्वकीयत्वेन जानातु व्रीहिशूर्पयोर्वर्षवृद्धत्वाद् भ्रातृत्वम्। का० [२, ४, १८] परापूतमिति निष्पुनातीति। 'रक्षः' 'परापूतं' निराकृतं शूर्पेण तुषेषु परापूतेषु तद्गतं रक्षोऽपि तैः सह भूमौ पातितम्। 'अरातयः' हविः प्रतिकूला आलस्यादिशत्रवश्च "परापूताः" निराकृताः। का० [२, ४, १९] अपहतमिति तुषान्निरस्यतीति। 'रक्षः' "अपहतं" दूरेऽपनीय मारितम्। भूमौ पतितान् दूरे निःसारयेत्। का० [२, ४, २०] वायुर्व इति विविनक्तीति। हे तण्डुलाः! 'वायुः' सूर्पचालनोत्थः 'वः' युष्मान् 'विविनक्तु' सूक्ष्मकणेभ्यः पृथक्करोतु। का० [२, ४, २१] देवो व इति पात्रमाभ्यामभिमन्त्रयते इति। हे

तण्डुलाः ! 'सविता देवः' 'वः' युष्मान् 'अच्छिद्रेण पाणिना' अङ्गुलिविश्लेषहीनेन स्वहस्तेन 'प्रतिगृभ्णातु' स्वीकरोतु । हृग्रहोर्भश्छन्दसीति हस्य भः [पा० का० ८, २, ३२ वा० १] । पात्रीप्रक्षेपसमये भूमौ पतनं मा भूदिति सवितुर्ग्रहणं प्रार्थ्यते । किम्भूतः सविता 'हिरण्यपाणिः' हिरण्ययुक्ताव-ङ्गुलीयाद्याभरणयुक्तौ पाणी यस्य स हिरण्यपाणिः । यद्वा दैत्यैः प्राशित्रप्रहारेण छिन्नौ सवितुः पाणी देवैर्हिरण्मयौ कृताविति सवितुर्हिरण्यपाणित्वमिति बह्वृचश्रुतौ कथा ॥ १६ ॥

धृष्टिरसि । अपाग्ने अग्निमामादं जहि निष्क्रव्यादꣳ सेध । आ देवयजं वह । ध्रुवमसि पृथिवीं दृꣳह ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य वधाय ॥ १७ ॥

का० मूलतः शाखां परिवास्योपवेषं करोतीति । [२, ४, २६] धृष्टिरसीत्युपवेषमादायेति च । पलाशशाखाया मूलदेशे छिन्नः काष्ठभाग उपवेषस्तमादत्ते । हे उपवेष ! त्वम् 'धृष्टिरसि' प्रगल्भोऽसि । ञिधृषा प्रागल्भ्ये । तीव्राङ्गाराणामितस्ततश्चालने प्रभुत्वादस्य प्रागल्भ्यम् । का० [२, ४, २६] अपाग्न इत्यङ्गारान् प्राचः करोतीति । तत्र त्रयोऽग्नयः सन्ति । एकः आमात् । आममपक्वमत्तीत्यामाल्लौकिकोऽग्निः । द्वितीयः क्रव्यात् । शवदाहे क्रव्यं मांसमत्तीति क्रव्यात् चिताग्निः । तृतीयो यागयोग्यः । तथाविधान् त्रीनङ्गारान् गार्हपत्यात्प्राग्भागे, पृथक्कृत्य तेषां मध्ये यागयोग्यमितरौ द्वावग्नी आमात् क्रव्यादंशौ तौ वारयितुं

गार्हपत्यं प्रत्युच्यते। हे 'अग्ने'! हे गार्हपत्य! 'आमादमग्निम्' 'अपजहि' परित्यज। व्यवहिताश्चेति [पा० १, ४, ८२] क्रियापदोपसर्गयोर्व्यवधानम्। तथा 'क्रव्यादम्' अग्निं 'निषेध' निःशेषं दूरे गमय परित्यजेत्यर्थः। का० [२, ४, २७] आ देवयजमित्यङ्गारमाहृत्येति। हे गार्हपत्य! 'देवयजं' देवानां यागयोग्यं तृतीयमङ्गारम् 'आवह' समीपमानय। देवा इज्यन्ते यस्मिन्नसौ देवयाट् तं देवयजम्। का० [४, २, २७] कपालेनावच्छादयति ध्रुवमसीति। देवयजमङ्गारं कपालेनाच्छादयेत्। हे कपाल! त्वं 'ध्रुवमसि' स्थिरं भवसि। अङ्गारोपरि वर्त्तमानमपि इतस्ततो न पतसि। 'पृथिवीं' भूमिं 'दृंह' दृढीकुरु। पुरोडाशपाकसमये त्वत्कृतव्यवधानेन भूमेर्दाहकृतं शैथिल्यं न भविष्यतीत्यर्थः। किञ्च 'त्वाम्' 'उपदधामि' अङ्गारे स्थापयामि। किमर्थं 'भ्रातृव्यस्य' शत्रोरसुरस्य पाप्मनो वा 'वधाय' हिंसार्थम्। व्यन् सपत्ने [पा० ४, १, १४५] इत्याद्युदात्तत्वात् भ्रातृव्यशब्दः शत्रुवाची। किम्भूतं त्वां 'ब्रह्मवनि'। वन षण सम्भक्तौ ब्रह्मणा ब्राह्मणेन वन्यते पुरोडाशनिष्पत्त्यर्थं स्वीक्रियते इति ब्रह्मवनि। तथा 'क्षत्रवनि' सजातवनीति पदद्वयं योज्यम्। सजाताः समानकुले जाताः यजमानस्य ज्ञातयस्तैर्वन्यते इति॥ १७॥

अग्ने ब्रह्म॑ गृभ्णीष्व। धरुणमस्यन्तरिक्षं दृꣳह ब्रह्मवनि॑ त्वा क्षत्रवनि॑ सजातवन्युपदधामि भ्रातृ॑व्यस्य बधाय॑। धर्त्रमसि दिवं॑ दृꣳह ब्रह्मवनि॑ त्वा क्षत्रवनि॑ सजातवन्युपदधामि

भ्रातृ॑व्यस्य व॒धाय॑ । विश्वा॑भ्य॒स्त्वाशा॑भ्य॒ उप॑द-
धामि॒ । चित॑ स्थोर्ध्व॒चित॑: । भृगू॑णा॒मङ्गि॑रसां॒
तप॑सा तप्यध्वम् ॥ १८ ॥

का० [२, ४, ३०] मध्याङ्गुल्या शून्येऽङ्गारं निदधात्यग्ने ब्रह्मे-तीति । हे 'अग्ने' निधीयमानाङ्गाररूपं 'ब्रह्म' प्रौढं कर्मास्माभिः क्रियमाणं 'गृभ्णीष्व' गृहाण । नाशकरक्षोवधेनानुगृहाण । यद्वा ब्रह्म ब्राह्मणं मामनुगृहाण । अङ्गुलीदानासक्तं मा दृंहे-त्यर्थः । का० [२,४,३१] धरुणमिति पश्चादिति । पूर्वस्थापित-कपालस्य पश्चाद्भागे द्वितीयं निदधाति । हे द्वितीय कपाल ! त्वं 'धरुणं' पुरोडाशस्य धारकम् 'असि' । अतोऽन्तरिक्षं 'दृंह' दृढीकुरु । पुरोडाशपाकोत्पन्नज्वालयान्तरिक्षलोकोपद्रवो यथा न स्यात् तथा कुरु । यद्यप्येतत् कपालं ज्वालान्तरिक्ष-योर्मध्ये व्यवधायकं नास्ति तथाप्यन्तरिक्षदार्ढ्याय कपाल-देवता प्रार्थ्यते । ब्रह्मवनीत्यादि पूर्ववत् का० [ २,४,३२ ] पुरस्ताद्धर्त्रमितीति । प्रथमस्य पूर्वभागे तृतीयं स्थापयेत् । हे कपाल ! त्वं 'धर्त्रं' धारकम् 'असि' । 'दिवं' दृंह । ज्वालाग्रेण दाहाभावो द्युलोकस्य दार्ढ्यम् । अन्यत् पूर्ववत् । का० [ २,४, ३३ ] विश्वाभ्य इति । दक्षिणत इति । हे चतुर्थ कपाल ! 'विश्वाभ्यः आशाभ्यः' सर्वदिग्भ्यः सर्वदिग्-दार्ढ्याय 'त्वा' 'उपदधामि' । एवं कपालत्रयोपधानेन यज-मानो लोकत्रयं जयति । चतुर्थेन दिशो जयति । तद्गतः पुरोडाशो लोकत्रयरूपो भूत्वा देवताः प्रीणातीत्याशयः । का० [ २,४, ३४ ] समं विभज्य द्वे दक्षिणत एवमुत्तर-तश्चित स्थेतीति । आग्नेयपुरोडाशस्याष्टकपालत्वाच्चतुर्णां स्थापितत्वादवशिष्टानां चतुर्णां मध्ये द्वे द्वे दक्षिणोत्तरयोर्नि-

दध्यात्। चित्र् चयने क्विबन्तस्य चित इति बहुवचनम्। हे कपालविशेषाः! यूयं 'चितः स्थ' प्रथमकपालोपचयकारिण्यः स्थ भवथ। तथा ऊर्ध्वचितः स्थ ऊर्ध्वमुपहितानां द्वितीयादिकपालानामुपकारिणो भवथ। का० [२, ४, १८] भृगूणामित्यङ्गारैरभ्यूहतीति। अङ्गारैः कपालानि छादयेत्। हे कपालानि! यूयं 'भृगूणामङ्गिरसां' भृगूनामकानामङ्गिरोनामकानां देवर्षीणां तपसा तपोरूपेणाग्निना-नेन 'तप्यध्वम्' तप्तानि भवत। अस्याग्नेस्तदीयरूपत्वं भावयेदित्यर्थः॥ १८॥

शर्मासि। अवधूतꣳ रक्षोऽवधूता अरातयः। अदित्यास्त्वगसि प्रति त्वादितिर्वेत्तु। धिषणासि पर्वती प्रति त्वादित्यास्त्वग्वेत्तु। दिवः स्कम्भनीरसि। धिषणासि पार्वतेयी प्रति त्वा पर्वती वेत्तु॥ १९॥

का० [२, ५, २] कृष्णाजिनमादत्ते पूर्ववदिति। यथावघातार्थं कृष्णाजिनप्रयोगस्तद्वदत्रापि। शर्मासि। अवधूतम्। 'अदित्याः' इति मन्त्रत्रयं व्याख्यातम्॥ का० [२, ५, ३] तस्मिन् दृषदं धिषणासीति। तस्मिंश्चर्मणि शिलां स्थापयेत्। हे शिले! पेषणाधारभूते! त्वं 'पर्वती' पर्वतात्मिका तदुत्पन्ना त्वं 'धिषणासि' धियं बुद्धिं कर्म वा सिनोति व्याप्नोति ददाति वा धिषणा। कृत्स्नत्वमार्षम्। पर्वतवत् धारयन्त्यसि। 'अदित्याः' भूमेः 'त्वक्' कृष्णाजिनरूपा तादृशी 'त्वा' त्वां 'प्रति वेत्तु' त्वदवस्थानमनुजानातु। का० [२, ५, ४] पश्चाच्छम्यामुपोहत्युदीचीं

दिव इतीति। दृषदः पश्चाद्भागेऽधस्ताच्छम्यां स्थापयेत्। तां प्रत्युच्यते। हे शम्ये! 'दिवः' द्युलोकस्य 'स्कम्भनीः' स्तम्भनकारिणी त्वम् 'असि' व्यत्ययेन द्वितीयाबहुवचनम् पतनवारणायान्तरिक्षरूपेण स्तम्भनकारित्वम्। अन्तरिक्षेण ह्यमे द्यावापृथिवी विष्टब्धे इति श्रुतेः [ १, २, १, १६ ]॥ का० [ २, ५, ५, ] दृषद्युपलां धिषणासीति। हे उपले! उपरितनशिले! त्वं 'धिषणासि' पेषणव्यापारधारिकासि। किम्भूता पार्वतेयी' पर्वत्या अधस्तनदृषदः पुत्री पार्वतेयी बालस्वरूपा।। 'कनीयसी ह्येषा दुहितेव भवतीति' श्रुतेः [ १, २, १, १७ ] अतः 'पर्वती' मातृसमा त्वां 'प्रतिवेत्तु' पुत्रीं जानातु ॥ १८ ॥

धान्यमसि धिनुहि देवान्। प्राणाय त्वा। उदानाय त्वा। व्यानाय त्वा। दीर्घामनु प्रसितिमायुषे धां देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना। चक्षुषे त्वा। महीनां पयोऽसि ॥ २० ॥

का० [ २, ५, ६, ] धान्यमसीति तण्डुलानोप्येति। हे हविः! त्वं 'धान्यमसि'। धिनोति प्रीणातीति धान्यम्। अतो 'देवान्' अग्न्यादीन् 'धिनुहि' प्रीणय। का० [ २, ५, ६ ] पिनष्टि प्राणाय त्वेति प्रतिमन्त्रमिति। प्रकर्षेण अनिति सर्वदा मुखे चेष्टत इति प्राणः श्वासवायुः। उदनिति ऊर्ध्वं चेष्टत इत्युदानः उत्क्रान्तिवायुः। व्यनिति व्याप्य चेष्टते इति व्यानो व्यापको बलहेतुर्वायुः। हे तण्डुल! 'त्वा' त्वां 'प्राणाय' प्राणदानार्थं पिनष्मीति शेषः। एवमुत्त-

रमन्वयोर्योज्यम्। देवानां सजीवं हविर्भवतीत्येभिर्मन्त्रै-र्हविषां प्राणादिदानेन सजीवत्वं क्रियत इत्यभिप्रायः॥ का० [२, ५, ७] दीर्घामिति कृष्णाजिने प्रोहतीति। प्रसयनं प्रसितिः। षिञ् बन्धने प्रबन्धः कर्मसन्ततिः। दीर्घामविच्छिन्नां 'प्रसितिमनु कर्मसन्ततिमनुलक्ष्य 'आयुषे' यजमानस्यायुरभि-वृद्ध्यर्थं हे हविः! त्वां 'धां' कृष्णाजिने दधामि। दधातेर्लुङि बहुलं छन्दस्यमाङ्योगेऽपीति [पा० ६, ४, ७५] अडाग-माभावः। यजमानस्यायुर्वृद्धौ सत्यां कर्मसन्ततिः प्रवर्त्तत इति भावः। यद्वायमर्थः। पूर्वमन्त्रैर्हविषः प्राणादिदानेन सजीवत्वं कृतम् अनेन पुनरायुर्दीयते हविषः। हे हविः! 'दीर्घां प्रसितिं कृष्णाजिनाख्यामनु त्वां धां धारयामि कृष्णाजिने प्रक्षिपामीत्यर्थः। किमर्थम्। आयुषे त्वदीयायुर्वृ-द्ध्यर्थम्। प्रसितिः प्रसयनात् तन्तुर्वा जालं वेति [निरु० ६, १२] यास्कोक्तेरिह पिष्टग्राहकत्वात् प्रसितिशब्देन कृष्णा-जिनमुच्यते। देवो व इत्यादिमन्त्रशेषो व्याख्यातः। का० [२, ५, ८] चक्षुषे त्वेतीक्षत इति। हे हविः! चक्षुषे यज-मानस्य चक्षुरिन्द्रियपाटवाय 'त्वा' त्वां पश्यामीति शेषः। यद्वा चक्षुषे तव चक्षुरादिवाह्येन्द्रियदानाय त्वामीक्षे। हविषः सजीवत्वे कृते चक्षुराद्यपेक्षा भवतीत्यनेन तत् क्रियते इति भावः। का० [२, ५, ९] पिष्यमाणेषु निर्व-पत्यन्यो महीनामित्याज्यमिति। हे आज्य! त्वं 'महीनां' गवां 'पयोऽसि' क्षीरमसि क्षीरोत्पन्नत्वात् घृतं पयःशब्दे-नोच्यते। महीति गोनाम [निघ० २, ११]॥ २०॥

दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒वेऽश्विनो॑र्बा॒हुभ्यां॑ पू॒ष्णो हस्ता॑भ्याम्। सं व॑पामि॒। समाप॒ ओष॑·

धीभिः समोषधयो रसेन । सꣳ रेवतीर्जगतीभिः पृच्यन्ताꣳ संमधुमतीर्मधुमतीभिः पृच्यन्ताम् ॥ २१ ॥

का० [ २, ५, १० ] पात्र्यां सपवित्रायां पिष्टान्यावपति देवस्य त्वेतीति । हस्ताभ्यामित्यन्तं व्याख्यातम् । एतानि पिष्टानि 'संवपामि' पात्र्यां सम्यक् क्षिपामि । का० [ २, ५, १२—१३ ] उपसर्जनीरानयत्यन्यः पवित्राभ्यां प्रतिगृह्णाति समाप इतीति । पिष्टसंवपनीया आप उपसर्जन्यः । ता अग्नीदानयेदध्वर्युः पवित्राभ्यां प्रतिगृह्णीयात् । 'आपः' उपसर्जनीरूपाः 'ओषधीभिः' पिष्टरूपाभिः 'संपृच्यन्ताम्' । पृची सम्पर्के सङ्गच्छन्तां सम्यगेकीभवन्तु । तथा 'ओषधयः' पिष्टाख्या रसेन उपसर्जनीरूपिणोदकेन 'संपृच्यन्ताम्' । आपो हि ओषधीनां रसः । तथा 'रेवतीः' रेवत्यः आपः 'जगतीभिः' पिष्टाख्याभिः 'संपृच्यन्तां' रेवत्य आपो जगत्य ओषधय इति श्रुतेः [ १, २, २, २ ] । 'मधुमतीः' माधुर्योपेता आपः 'मधुमतीभिः' माधुर्योपेताभिः पिष्टरूपौषधीभिः संपृच्यन्ताम् । अपामोषधीनां परस्परं [ च ] परस्परं प्रीतिहेतुत्वात् सम्पर्को भवत्वित्यर्थः ॥ २१ ॥

जनयत्यै त्वा संयौमि । इदमग्नेः । इदमग्नीषोमयोः । इषे त्वा । घर्मोऽसि विश्वायुः । उरुप्रथा उरु प्रथस्वोरु ते यज्ञपतिः प्रथताम् । अग्निष्टे त्वचं मा हिꣳसीत् । देवस्त्वा सविता श्रपयतु वर्षिष्ठेऽधि नाके ॥ २२ ॥

का० [२, ५, १४] संयौति जनयत्यै त्वेतीति। अपां पिष्टानाञ्च मिश्रीकरणं संयपनम्। हे जलपिष्टरूपपदार्थद्वय! त्वां 'संयौमि' सम्यग् मिश्रीकरोमि। यु मिश्रणामिश्रणयोः। किमर्थं 'जनयत्यै' यजमानस्य प्रजोत्पादनार्थम्। जलपिष्टयोर्यथा मिश्रणं तथा शुक्रशोणितमिश्रणेन यजमानस्य प्रजोत्पत्तिर्भवति तदर्थं त्वां संयौमि। यद्वा जनयत्यै पुरोडाशोत्पत्त्यै त्वां संयौमि। का० [२, ५, १५] 'संविभज्यासंहरिष्यन्नालभते इदमग्नेरिदमग्नीषोमयोरितीति। मिश्रीकृतस्य पिष्टस्यावदानाङ्कितं पिण्डद्वयं कृत्वा पुनरमेलयिष्यन् 'इदमग्नेः' अग्निसम्बन्धि भवत्विति प्रथमं पिण्डं स्पृशेत्। इदमग्नीषोमयोर्भवत्विति द्वितीयं स्पृशेत्। का० [२, ५, १७] इषे त्वेत्याज्यमधिश्रयतीति। हे आज्य! 'इषे' इष्यमाणवृष्ट्यर्थं त्वामधिश्रयामीति शेषः। आज्यप्रविलापनार्थं तत्पात्रस्याग्नौ स्थापनमधिश्रयणम्। का० [२, ५, १८] घर्मोऽसीति पुरोडाशमिति। हे पुरोडाश! त्वं घर्मोऽसि। घृ क्षरणदीप्त्योः। घर्मशब्देन दीप्यमानः प्रवर्ग्य उच्यते। अग्र्यमाणतया दीप्यमानत्वात् प्रवर्ग्योऽसि। तथा 'विश्वायुः' विश्वं कृत्स्नम् आयुर्यस्मात् स विश्वायुः। यस्माद्यजमानः सर्वमायुराप्नोतीति भावः। का० [२, ५, २०] उरुप्रथा इति प्रथयति यावत्कपालमिति। सर्वकपालेषु संश्लेषयितुं तं प्रसारयेत्। हे पुरोडाश! त्वं स्वभावतः 'उरुप्रथाः' उरु विस्तीर्णं यथा तथा प्रथते प्रसरतीत्युरुप्रथाः। अत इदानीमपि 'उरु प्रथस्व' प्रख्यातो भव। किञ्च 'ते यज्ञपतिः' तव यजमानः उरु विस्तीर्णं पुत्रपश्वादिभिः प्रथतां प्रख्यातो भवतु। का० [५, ९, २१] अग्निष्ट इत्यद्भिरभिमृशतीति। हे पुरोडाश! 'अग्निः' अपणाय प्रवृत्तः ते तव 'त्वचं' त्वक-

सद्दृशमुपरितनभागं 'मा हिंसीत्' मा विनाशयतु। अति-दाहेन मषीभावो विनाशः सोऽत्र मास्त्वित्यर्थः। अथवातपेष-त्योत्य: अपक्वाज्जायमानस्य हविष उपद्रवो जलस्पर्शेन शाम्य-तीति भावः। का० [ २, ५, २३ ] देवस्त्वेति अपणमिति। हे पुरोडाश! 'सविता देवः' 'वर्षिष्ठे' अत्यन्तवृद्धे 'नाके' द्युलोकवर्त्तिनि नाकनाम्नि अग्नौ 'त्वा' त्वाम् 'अधि' अधि-श्रित्य 'अपयतु' पक्वं करोतु। मनुष्यस्य अपणे कर्तृत्वं मा भूदित्यभिप्रेत्य देवस्त्वेत्युच्यते। दिवि नाको नामाग्नी रचो-हेति तित्तिरिवचनान्नाको नाम स्वर्गस्थोऽग्निः॥ २२॥

मा भे॒र्मा संवि॑क्था। अत॑मेरुर्य॒ज्ञो॑ऽत॑मे-रु॒र्यज॑मानस्य प्र॒जा भू॑यात्। त्रि॒ताय॑ त्वा। द्वि॒ताय॑ त्वा। ए॒क॒ताय॑ त्वा॥ २३॥

का० [ २, ५, २४ ] मा भेरित्यालभत इति। हे पुरोडाश! त्वं 'मा भेः' भयं मा कार्षीः। 'मा संविक्थाः' चलनं मा कार्षीः। ञिभी भये। ओविजी भयचलनयोरित्यनयोः प्रयोगौ। का० [ २, ५, २५ ] अतमेरुरिति शृतावभिवा-सयति भस्मना वेदेनोपवेषेण वेति। 'यज्ञः' यागहेतुः पुरोडाशः 'अतमेरुः' भूयात्। तमु ग्लानौ। ताम्यतीति तमेरुः औणादिक एरुप्रत्ययः। न तमेरुरतमेरुः। भस्माच्छादनेन ग्लानिरहितो भवतु। यजमानस्य प्रजा पुत्रपौत्रप्रपौत्रादिः अतमेरुः ग्लानिरहिता भूयात्। यजमानस्य प्रजायाः कदाचिद्दुःखं मास्त्वित्यर्थः। का० [ २, ५, २६ ] पात्राङ्गुलि-प्रक्षालनमात्रेभ्यो निनयत्यभितप्य प्रत्यगसंस्यन्दमानं त्रिताय त्वेति प्रतिमन्त्रमिति। हे पात्राङ्गुलिप्रक्षालनोदक! त्रिताय त्रितनाम्ने देवाय त्वां निनयामीति शेषः। तथा

द्वित्ताय त्वा निनयामि। तथा एकताय त्वा निनयामि। पूर्वं ज्ञातत्रितेतो: भीतोऽग्निरप: प्राविशत्ततो देवास्तं ज्ञात्वा अद्भ्यस्तदाग्निना वीर्य्यमप्सु मुक्तं तत आप्त्या उत्पन्नास्त्रित-द्वितैकतसंज्ञास्ते देवैः सह चरन्तो यज्ञे पात्रीप्रक्षालनजल-लक्षणं भागं लेभिरे इति श्रुतिकथानुसन्धातव्या [ १, २, ३, १ ] ॥ २३ ॥

देवस्य॑ त्वा सवि॒तुः प्र॑स॒वेऽश्विनो॑र्बा॒हुभ्या॑म्
पू॒ष्णो हस्ता॑भ्याम्। आद॑देऽध्वर॒कृतं॑ दे॒वेभ्यः।
इन्द्र॑स्य बा॒हुर॑सि दक्षि॑णः स॒हस्र॑भृष्टिः श॒तते॑-
जा वा॒युर॑सि ति॒ग्मते॑जा द्वि॒षतो॑ ब॒धः ॥ २४ ॥

का० [ २, ६, १२ ] देवस्य त्वेति स्फ्यमादायेति। देवस्य त्वेति व्याख्यातम्। देवेभ्यो देवोपकारार्थं अध्वरकृतं अध्वरं करोतीति वेदिखननादिद्वारेणेत्यध्वरकृतं स्फ्यमहमाददे गृह्णामि। का० [ २, ६, १३ ] सव्यपाणौ सव्ये कृत्वा दक्षिणेनालभ्य जपतीन्द्रस्य बाहुरितीति। हे स्फ्य ! त्वमिन्द्रस्य दक्षिणो बाहुरसि। तेन बाहुना धृतत्वात्तत्समानवीर्य्योपेतत्वाद्वा स्फ्यस्य बाहुरूपत्वोपचारः। किम्भूतः ? स्फ्यः सहस्रभृष्टिः भृष्टिर्भर्जनं पाको मारणमिति यावत्। सहस्र-सङ्ख्याकानां शत्रूणां भृष्टिर्यस्य स सहस्रभृष्टिः। तथा शत-तेजाः शतं तेजांसि यस्य सः बहुधा दीप्यमानः। किञ्च वायुरसि न केवलमिन्द्रबाहुसदृशः किन्तु वायुसदृशोऽप्यसि। अत एव तिग्मतेजाः तीक्ष्णतेजाः यथा वायुर्वह्निं प्रदीप्य तीव्रां ज्वालामुत्पादयंस्तीव्रतेजा भवति। एवं स्फ्योऽपि स्तम्ब-च्छेदरूपं कर्म कुर्वंस्तीव्रतेजा उच्यते। तथा द्विषतो बधः। हन्तीति बधः कर्मद्वेषिणामसुरादीनां हन्तेत्यर्थः ॥ २४ ॥

पृथिवि देवयजन्योषध्यास्ते मूलं मा हिंᳫ सिषम् । व्रजं गच्छ गोष्ठानम् । वर्षतु ते द्यौः । बधान देव सवितः परमस्यां पृथिव्याᳫ शतेन पाशैर्योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौक् ॥ २५ ॥

का० [ २, ६, १५, १६ ] पृथिवि देवयजनीति हृत्वे- ऽन्तर्हिते प्रहरतीति । हे पृथिवि ! हे देवयजनि ! देवा इज्यन्ते यस्यां सा देवयजनी तस्याः सम्बोधने हे देव- यजनि ! ते तव ओषध्यास्तृणरूपाया मूलमहं मा हिंसिषम् मा विनाशयामि । का० [ २, ६, १७ ] व्रजं गच्छेति पुरीष- मादत्त इति । स्फ्यप्रहारोत्पन्ना मृत् पुरीषमुच्यते । हे पुरीष ! त्वं व्रजं गच्छ । व्रजन्ति गच्छन्ति स्थातुं गावो यत्र स देशो व्रजस्तं किम्भूतम् गोष्ठानम् गवां स्थानमिदा- नीमवस्थितिर्यत्र तम् गोकुलं तदीयं स्थानं गच्छेत्यर्थः ॥ का० [ २,६, १८ ] वर्षतु त इति वेदिं प्रेक्षत इति । हे वेदे ! ते तुभ्यं त्वदर्थं द्यौर्द्युलोकाभिमानी देवो वर्षतु जलसेकं करोतु । वृष सेचने वर्षणेन खननजनितदुःखशान्तिरस्त्वित्यर्थः ॥ का० [ २, ६, १८ ] बधानेत्युत्करे करोतीति । स्फ्योद्धृतां मृदमुत्करे त्यजेत् । हे देव सवितः ! योऽस्मान् द्वेष्टि द्वेषं करोति वयं च यं शत्रुं द्विष्मस्तमुभयविधं शत्रुं परमस्यां पृथिव्यां बधान । परमा अन्तिमा पृथिवी । छान्दसः स्याडा- गमः । उत्करे चिह्नितायां भूम्यां निगूढस्य शत्रोस्तत्र बन्धनं कुरु यत्र भूमिरन्तिमप्रदेशेऽन्धतामिस्रो नरकोऽस्ति । तथा च श्रुतिः [ १, २, ४, १६ ] अन्धे तमसि बधानेति यदाह

परमस्यां पृथिव्यामिति। कैर्बन्धनं कर्त्तव्यं तदाह शतेन पाशैः शतसङ्ख्याकाभिर्बन्धनरज्जुभिः। किञ्च अस्मादन्धतामिस्राबरकान्तं मा मौक् कदाचिदपि मा मुञ्च ॥ २५ ॥

अपाररुं पृथिव्यै देवयजनाद्वध्यासम्। ब्रजं०—०मौक्। अररो दिवं मा पप्तः। द्रप्सस्ते द्यां मा स्कन्। ब्रजं०—०मौक् ॥ २६ ॥

का० [ २, ६, २१ ] अपाररुमिति द्वितीयं प्रहरतीति। पृथिव्यै देवयजनात् पृथिव्याः सम्बन्धिनो देवयजनाख्याद्वेदिस्थानात् अररुम् अररुनामानमसुरमप वध्यासम्। अपनीय यथा हतो भवति तथा करवाणि। अनेन मन्त्रेण द्वितीयवारं पूर्ववत् प्रहरेत् व्रजं वर्त्तु बधानेति मन्त्रत्रयस्य प्रयोगो व्याख्या च पूर्ववत् ॥ का० [ २, ६, २२ ] अभिन्यस्यत्यग्नीदुत्करमररो दिवमितीति। हे अररो असुर! दिवं द्युलोकं यागफलरूपं त्वं मा पप्तः मा गमः। स्वर्गं त्वया न गन्तव्यम्। पत्लृ गतौ पतः पुमिति [ पा० ७, ४, १८ ] लुङि पुमागमे रूपम् ॥ का० [ २, ६, २३ ] द्रप्सस्त इति तृतीयमिति। हे वेदिदेवते! ते तव पृथिवीरूपाया यो द्रप्स उपजीव्यो रसः स द्यां द्युलोकं मा स्कन् मा स्कन्दतु मा गच्छतु स्कन्दिर्गतिशोषणयोः। व्रजं गच्छेत्यादिमन्त्रत्रयस्य प्रयोगो व्याख्या च पूर्ववत् ॥ २६ ॥

गायत्रेण त्वा छन्दसा परिगृह्णामि। त्रैष्टुभेन त्वा छन्दसा परिगृह्णामि। जागतेन त्वा छन्दसा परिगृह्णामि। सुक्ष्मा चासि शिवा

चासि । स्योना चासि सुषदा चासि । ऊर्ज्ज-स्वती चासि पयस्वती च ॥ २७ ॥

का० [ २, ६, २५ ] पूर्वं परिग्रहं परिगृह्णाति दक्षिणतः पश्चादुत्तरतश्च स्फ्येन गायत्रेणेति प्रतिमन्त्रमिति । यस्मात् प्रदेशादरत्निष्काशितस्तत्र वेदेरिक्तां निश्चेतुं दक्षिणा-दिदिक्त्रये स्फ्येन रेखात्रयकरणं पूर्वः परिग्रहः । विष्णुर्देवता मन्त्रत्रयस्य । ते प्राञ्चं विष्णुं निपाद्य छन्दोभिरभितः पर्य्य-गृह्णन्निति श्रुतेः [ १, २, ५, ६ ] । हे विष्णो ! त्वा त्वां गायत्रेण छन्दसा गायत्र्यादिच्छन्दस्त्रयरूपतया भावितेन स्फ्येन दिक्त्रये परिगृह्णामि । एवं त्रैष्टुभेन जागतेनेत्युत्तर-मन्त्रयोः । ततः छन्दोदेवता दिक्त्रयेऽसुरेभ्यस्त्वां पालयि-ष्यन्ति । पूर्वस्यामाहवनीय एव पालकोऽस्तीति भावः । प्रजापतिपुत्रा देवा असुराश्च पूर्वं स्पर्धां चक्रुस्तदा देवान् पराजयं प्राप्तान्मत्वा भूमिमसुरा विभेजुस्तदा देवा वामन-रूपं विष्णुमग्रे कृत्वाऽसुरानागत्यास्मभ्यमपि भूम्यंशो दातव्य इति तानयाचिषुः । ततोऽसुरा असूयन्तोऽयं विष्णुर्यावति भूभागे शेते तावान् भवदीयोऽस्त्वित्यूचुस्ततो देवा बह्वेत-दस्माकमित्युक्त्वा ते प्राञ्चं विष्णुं निपात्य गायत्रेणेत्यादि-मन्त्रैर्यज्ञभूमिं जगृहुः । यज्ञो विष्णुः स यत्र तिष्ठति सैव यज्ञभूमिरिति तैर्विदितत्वाद्वेदिरिति तद्भूमेर्नामेति [ १, २, ५, १—७ ] श्रुतिकथामनुसन्धाय वेदिग्रहणं विधेयम् ॥ का० [ २, ६, ३१ ] उत्तरं परिग्रहं परिगृह्णाति सुक्ष्मा स्योनोर्जस्व-तीति । वेदिखननात् पूर्वं क्रियमाणः पूर्वः परिग्रहः पश्चात् क्रियमाण उत्तरपरिग्रहः । तत्रापि पूर्ववद्दिक्त्रये स्फ्येन रेखात्रयं कार्य्यम् । हे वेदे ! त्वं सुक्ष्मासि क्षिवा-

शान्ता चासि। क्ष्मा भूमिः शोभना क्ष्मा सुक्ष्मा खननेनाश्मादिदोषनिवर्त्तनं भूमेः शोभनत्वम्। उग्रस्यासुरस्य निःकाशनेन शान्तत्वम्। गुणद्वयस्यान्योन्यसमुच्चयार्थौ चकारौ एकोऽयं मन्त्रः। स्योना सुखरूपासि। स्योनमिति सुखनाम [ निघ० ३, ६ ]। सुषदा सुष्ठु सीदन्ति देवा यस्यां सा सुषदा। सम्यगुपवेशनयोग्या चासि। चकारौ पूर्ववत्। द्वितीयोऽयं मन्त्रः। ऊर्जस्वती पयस्वती चासि। ऊर्जःशब्दोऽन्नवाची। पयःशब्दस्तद्विकारदध्यादिवाची। तदुभयवती। चौ पूर्ववत्। तृतीयो मन्त्रः ॥ २७ ॥

पुरा क्रूरस्य विसृपो विरप्शिन्नुदादाय पृथिवीं जीवदानुम्। यामैरयँश्चन्द्रमसि स्वधाभिस्तामु धीरासोऽनुदिश्य यजन्ते ॥ प्रोक्षणीरासादय। द्विषतो वधोऽसि ॥ २८ ॥

का० [ २,६, ३२ ] पुरा क्रूरस्येत्यनुमार्ष्टीति। अत्रेयमाख्यायिका मन्त्रेऽभिप्रेता। कदाचिद्देवानामसुरैः सह संग्राम उपस्थितस्तदा देवैर्मिथो मन्त्रितं यदस्या भूमेरुत्कृष्टं देवयजनस्थलं तच्चन्द्रे संस्थाप्य युद्धं कुर्मस्तत्र यद्यप्यस्माकं पराजयः स्यात्तदा देवयजने यागं विधाय पुनर्दैत्यपराजयं करिष्याम इति संमन्त्र्य भूमेः सारभागं देवयजनं चन्द्रे स्थापयामासुस्तत् कृष्णवर्णमिदानीमपि दृश्यत इत्याख्यानमयं मन्त्रो ब्रूते [ १, २, ५, १८ ]॥ पुरा क्रूरस्येति त्रिष्टुप् चन्द्रदेवत्या। विरप्शीति महन्नाम [ निघ० ३, ३ ] विविधं रपति वेदत्रयरूपेण शब्दं करोतीति विरप्शी। यज्ञो वेदित्वं प्राप्तो विष्णुः सम्बोध्यते। हे विरप्शिन् विष्णो परमेश्वर! त्वं शृणु

अनुगृह्णाणेति शेष:। क्रूरशब्दोऽत्र संग्रामवाची। संग्रामो वै क्रूरमिति श्रुते: [ १, २, ५, १८ ]। विविधं सर्पन्ति योधा यस्मिन्निति विसृप्। तस्येति क्रूरविशेषणं पञ्चम्यर्थो षष्ठी। विसृपो नानायोधयुतात् क्रूरात् युद्धात् पुरार्थाद्देवा: जीवदानुं जीवं ददातीति जीवदानुस्तां जीवस्य धात्रीं सारभूतां यां पृथिवीमुदादाय ऊर्ध्वं गृहीत्वा स्वधाभि: वेदै: सह चन्द्रमसि इन्दौ ऐरयन् प्राक्षिपन् स्थापयामासु: धीरास: धीरा मेधाविन: तामु उ एवार्थे तामेव चन्द्रस्थां पृथिवीमनुदिश्य दर्शनेन सम्पाद्य सेव भूमिरस्यां वेद्यां विद्यत इति भावयित्वा यजन्ते यागं कुर्वन्ति। स्वधाशब्दो यद्यप्यन्नवाची तथाप्यत्रान्नहेतुभूता वेदत्रयी कथ्यते। यां चन्द्रमसि ब्रह्मणा दधुरिति श्रुते: [ १, २, ५, १८ ] ब्रह्मणा वेदेन सहेत्यर्थ:। अनेन मन्त्रेण खातायां वेद्यां लोष्टकृतवैषम्यनिवृत्तये समीकरणरूपं मार्जनं कुर्य्यात्। प्रोक्षणीरासादयेति अग्नीध्रं प्रति प्रेष:। प्रोक्ष्यन्त आभिरिति प्रोक्षण्य आपस्ता आसादय वेद्यां स्थापय॥ का० [ २, ६, ४२ ] द्विषतो वध इति स्फ्यमुदञ्चं प्रहरतीति। हे स्फ्य ! त्वं द्विषत: शत्रोर्वधोऽसि हिंसकोऽसि ॥ २८ ॥

प्रत्युष्टꣳ रक्ष: प्रत्युष्टा अरातय:। निष्टप्तꣳ रक्षो निष्टप्ता अरातय:। अनिशितोऽसि सपत्नक्षिद् वाजिनं त्वा वाजेध्यायै सम्मार्ज्मि। प्रत्युष्टꣳ०-०। अनिशितासि सपत्नक्षिद् वाजिनीं त्वा वाजेध्यायै सम्मार्ज्मि ॥ २९ ॥

का० [ २, ६, ४६ ] स्रुवं प्रतप्य पूर्ववदिति। यथा शूर्पाग्निहोत्रहवण्यो: प्रत्युष्टमिति प्रतपनं कृतं तथा स्रुवस्यापि

कार्यमित्यर्थः। मन्त्रो व्याख्यातः॥ का० [ २, ६, ४६ ] वेदाग्रैरन्तरतः प्राक्सम्मार्ष्टि निशितमिति। हे स्रुव। त्वमनिशितोऽसि। शो तनूकरणे। नितरां शितस्तीक्ष्णीकृतो निशितस्तथा न भवतीत्यनिशितः। अस्मद्विषये तीक्ष्ण उपद्रवकारी न भवसीत्यर्थः। यतः सपत्नक्षित्। क्षिणु हिंसायाम्। सपत्नानस्मच्छत्रून् क्षिणोति हिनस्तीति सपत्नक्षित्। अत एव त्वां सम्माज्मि सम्यक् शोधयामि। मृजू शुद्धौ। किम्भूतं त्वां वाजिनं वाजोऽन्नमस्यास्तीति वाजिनं यज्ञद्वारा अन्नहेतुत्वादन्नवन्तम्। यद्वा वाजो यज्ञस्तदन्तं यज्ञो हि देवानामन्नमिति श्रुतेः [ ५, १, १, २ ]। वाजं यज्ञाख्यमन्नमर्हतीति वाजिनम्। अर्हार्थे इन्प्रत्ययः। किमर्थं सम्माज्मि। वाजेध्यायै जिदन्धी दीप्तौ। इन्धनं इध्या दीप्तिः। वाजस्येध्या वाजेध्या तस्यै वाजेध्यायै यज्ञस्य दीप्त्यै प्रकाशनार्थम्। शोधितेन स्रुवेणाज्ये गृहीते हुते च सति अग्निर्दीप्यते। तद्दीप्त्याहुतिफलभूतमन्नं प्रकाशितं भवतीत्यर्थः॥ का० [ २, ६,४७, ४८ ] प्रतप्य प्रतप्य प्रयच्छत्यनिशितेति स्रुच इति। अनिशितेति मन्त्रेण स्रुचस्तिस्रो जुहूपभृद्ध्रुवाः संमृज्य प्रत्येकं प्रत्युष्टमिति मन्त्रेण प्रतप्य प्रतप्य वेद्यां स्थापनार्थमध्वर्यवे प्रयच्छतीति सूत्रार्थः। प्रत्युष्टमिति व्याख्यातम्। अनिशितेत्यपि व्याख्यातम्। स्रुवस्य पुंस्त्वादादौ स्रुवसम्मार्जनम्। स्रुचां स्त्रीत्वात्पश्चात्। योषा वै स्रुग्वृषा स्रुव इत्यादिश्रुतेः [१, ३, १, ९ ]। जुह्वादीनां स्रुचां स्त्रीलिङ्गत्वात्तद्विशेषणयोरनिशिता वाजिनीमित्यनयोः स्त्रीत्वं विशेषः॥ २९॥

अदि॑त्यै॒ रास्ना॑सि। विष्णो॑र्वे॒ष्पो॑ऽसि। ऊ॒र्जे त्वा॑। अद॑ब्धेन त्वा॒ चक्षु॒षाव॑ पश्यामि। अ॒ग्नेः

जि॒ह्वासि॑ सु॒हूर्दे॒वेभ्यो॒ धाम्ने॑ धाम्ने मे भ॒व यजु॑षे यजु॒षे ॥ ३० ॥

का० [ २, ७, १ ] पत्नीᳫं संनह्यति प्रत्यग्दक्षिणत उपविष्टां गार्हपत्यस्य मुञ्जयोक्त्रेण त्रिवृता परिहरत्यधोवासोऽदित्यै रास्नासीतीति। हे योक्त्र ! अदित्यै अदित्या भूम्यास्त्वं रास्नासि रशना भवसि ॥ का० [ २, ७, २, ३ ] दक्षिणं पाशमुत्तरे प्रतिमुच्योर्ध्वमुद्गूहति विष्णोर्वेष्य इति न ग्रन्थिं करोतीति। हे दक्षिण पाश ! त्वं विष्णोः यज्ञस्य वेष्योऽसि व्यापकोऽसि। विष्लृ व्याप्तौ ॥ का० [ २, ७, ४ ] ऊर्जे त्वेत्याज्यमुद्वास्येति। हे आज्य ! त्वामुद्वासयामीति शेषः। किमर्थम् ? ऊर्जे उत्तमरसलाभाय। विलापितं घृतं सुखादु भवति ॥ का० [ २, ७, ४ ] पत्नीमवेक्षयत्यदब्धेनेतीति। दब्धोतिर्हिंसार्थः। हे आज्य ! अदब्धेन अनुपहिंसितेन चक्षुषा त्वामवपश्यामि। अवाचीनं यथा तथाधोमुखी सती पश्यामि। किञ्च हे आज्य ! त्वमग्नेर्जिह्वासि। यदाज्यमग्नौ हूयते तदा जिह्वेव ज्वालोत्पद्यतेऽतस्त्वमग्नेर्जिह्वा। किम्भूतं देवेभ्योऽर्थाय सुहूः सुष्ठु हूयते इति सुहूः पुंस्त्वं छान्दसम्। यद्वा जिह्वाविशेषणं सुष्ठु ह्वयन्ते देवा आह्वयन्तेऽनया सा सुहूर्जिह्वा। ज्वालां दृष्ट्वा आयन्तीत्यर्थः। अतो मे मम धाम्ने धाम्ने भव तथा यजुषे यजुषे च भव। धाम स्थानम्। फलेन युज्यत इति यजुःशब्दो यागवाची। धाम्ने धाम्ने तत्तद्यागफलोपभोगस्थानसिद्ध्यर्थं भव। यजुषे यजुषे तत्तद्यागसिद्धये योग्यं भवेत्यर्थः ॥ ३० ॥

स॒वि॒तुस्त्वा॑ प्रस॒व उत्पु॑ना॒म्यच्छि॑द्रेण प॒वि-

वे॑ण सूर्य॑स्य र॒श्मिभि॑: । स॒वि॒तुर्व॒: प्रस॒व०—०

र॒श्मिभि॑: । तेजो॑ऽसि शु॒क्रम॑स्य॒मृत॑मसि । धाम॒

नामा॑सि प्रि॒यं दे॒वाना॒मना॑धृष्टं देव॒यज॑नमसि

॥ ३१ ॥

इति माध्यन्दिनीयायां वाजसनेयिसंहितायां

प्रथमोऽध्यायः ॥

---

का० [ २, ७, ७, ] सवितुस्त्वेत्याज्यमुत्पुनातीति । सवितुर्देवस्य प्रसवे आज्ञायां वर्त्तमानः सन्त्वामुत्पुनामि शोधयामि । व्याख्यातमन्यत् ॥ का० [ २, ७, ८ ] प्रोक्षणीश्च पूर्ववदिति । सवितुर्वः । वो युष्मानुत्पुनामीति व्याख्यातम् ॥ का० [ २, ७, ९ ] आज्यमवेक्षते तेजोऽसीति । हे आज्य ! त्वं तेजोऽसि । शरीरकान्तिहेतुत्वात्तेजस्त्वम् । शुक्रमसि दीप्तिमदसि । स्निग्धरूपत्वाद्दीप्तिमत्त्वम् । अमृतमसि विनाशरहितमसि । बहुदिवसावस्थानेऽप्योदनादिवत् पर्युषितत्वादिदोषाभावादविनाशित्वम् ॥ का० [ २, ७, ११, १२ ] स्रुवेणाज्यग्रहणं चतुर्जुह्वां धाम नामेति सञ्चमन्त्र इति । हे आज्य ! त्वं धाम स्थानमसि धीयते स्थाप्यते चित्तवृत्तिर्देवैरत्रेति धाम । तथा नाम नामयति आत्मानं प्रति सर्वाणि भूतानीति नाम । आज्यं दृष्ट्वा सर्वेऽप्यत्र नमन्ति । तथा देवानां प्रियमिष्टम् अनभिभूतम् । गतसारत्वदोषेणातिरस्कृतं चरुपुरोडाशादीनि चिरस्थित्या गतसाराणि स्युरितीदं

न तथा । देवयजनं देवा इज्यन्तेऽनेनेति यागसाधनम् ईदृशं त्वमस्यतस्त्वां गृह्णामीति वाक्यशेषः ॥ २१ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।

आद्याद्याध्यायव्याख्यातोऽयमध्यायः प्रथमोऽगमत् ॥ १ ॥

---

द्वितीयोऽध्यायः ॥

कृष्णोऽस्याखरेष्ठोऽग्नये त्वा जुष्टं प्रोक्षामि । वेदिरसि बर्हिषे त्वा जुष्टां प्रोक्षामि । बर्हिरसि स्रुग्भ्यस्त्वा जुष्टं प्रोक्षामि ॥ १ ॥

का० [ २, ७, १८ ] इध्मं प्रोक्षति विस्रंस्य वेदिं च बर्हिः प्रतिगृह्य वेद्यां कृत्वा पुरस्ताद्ग्रन्थि कृष्णोऽसीति प्रतिमन्त्रमिति ॥ इध्मं विस्रंस्य प्रोक्षेत् । वेदिञ्च प्रोक्षेत् । बर्हिरादाय वेद्यां पूर्वग्रन्थि कृत्वा प्रोक्षेत् क्रमान्मन्त्रत्रयेणेति सूत्रार्थः ॥ कृष्णोऽसि ॥ हे इध्म ! त्वं कृष्णोऽसि कृष्णमृगरूपो यज्ञोऽसि । इध्मपूलकस्य यज्ञसाधनत्वाद्यज्ञत्वोपचारः । किम्भूतः ? आखरेष्ठः । आ समन्तात् खरे कठिने वृक्षे तिष्ठतीति आखरेष्ठः । यद्वा खं स्वर्गं राति ददातीति खरः आहवनीयस्तत्रा समन्तात्तिष्ठतीत्याखरेष्ठः । अन्तोदात्तः कृष्णशब्दो वर्णवाची अयन्तु कृष्णशब्द आद्युदात्तत्वान्मृगवाची ॥ यज्ञः कदाचिद्देवेभ्योऽपक्रान्तः स्वगोपनाय कृष्णमृगो भूत्वा वने यज्ञियतरुमध्ये प्रविश्य कुत्रचित्कठिने वृक्षे तस्थौ । तदेतदभिप्रेत्य कृष्ण आखरेष्ठ इति इध्ममुच्यते । यज्ञो ह देवेभ्योऽपचक्राम स कृष्णो भूत्वा चचारेत्यादिश्रुतेः [ १, १, ४,

१]। स्थे च भाषायामिति स्थे परपदे [पा० ६, ३, २०] भाषायां सप्तम्या अलुग्निषेधाद्देऽलुक्। पूर्वपदादिति [पा० ८, ३, १०६] षत्वम्। अतोऽग्नये जुष्टं प्रियं त्वां प्रोक्षामि शुद्ध्यर्थं जलेनेति शेषः। वेदिरसीति वेदिं प्रोक्षति। त्वं वेदिरसि। विद्यते लभ्यत इति वेदिः। विदॢ लाभे। देवैरसुरेभ्यो लब्धत्वाद्वेदिः। अतो बर्हिर्जुष्टां बर्हिषो धारणोपयोगितया प्रियां त्वां प्रोक्षामि। पृथ्वीरूपाया वेदेः प्रजारूपस्य बर्हिषो धारकत्वं युक्तम्॥ बर्हिरसीति बर्हिःप्रोक्षणम्। हे दर्भ! त्वं बर्हिरसि प्रभूतत्वाद्वेदिवृंहणसमर्थमसि। अतः स्रुग्भ्यो जुष्टं स्रुचां धारणात् प्रियं त्वां प्रोक्षामि॥ १॥

अदि॑त्यै॒ व्युन्द॑नमसि। विष्णो॑ स्तु॒पो॒ऽसि। ऊर्ण॑म्रदसं त्वा स्तृणामि स्वास॒स्थां दे॒वेभ्यः॑। भुव॑पतये॒ स्वाहा॑। भुव॑नपतये॒ स्वाहा॑। भू॒ताना॒ं पत॑ये॒ स्वाहा॑॥ २॥

का० [२, ७, २०] शेषं मूलेषूपसिञ्चत्यदित्यै व्युन्दनमितीति॥ हे प्रोक्षणीशेषोदक! त्वमदित्यै अदित्या भूम्याः व्युन्दनमसि विशेषेण क्लेदनमसि॥ का० [२, ७, २१] बर्हिर्विस्रंस्य पुरस्तात्प्रस्तरग्रहणं विष्णोरितीति। हे प्रस्तर! दर्भमुष्टिरूप! त्वं विष्णोर्यज्ञस्य स्तुपोऽसि। ष्ट्यै स्त्यै शब्दसङ्घातयोः। औणादिको डुपप्रत्ययः। दर्भसङ्घातरूपत्वात् केशसङ्घातरूपा शिखेव भवसि॥ का० [२, ७, २२] वेदिं स्तृणात्यूर्णम्रदसमितीति। हे वेदे! त्वां स्तृणामि बर्हिषा छादयामि। किम्भूतां त्वाम्? ऊर्णम्रदसमूर्णमिव मृदु

अतिशयेन मृदुर्म्रदीयसी ईयसोपश्छान्दस:। यथा अभो-वेष्टुं भूमि: कम्बलादिनाच्छाद्यते काठिन्याभावाय तथा त्वयाच्छादिता वेदिर्मृदु: स्यात्। पुन: किम्भूतां त्वां देवेभ्य: स्वासस्थां देवोपकाराय सुखेनासितुं स्थानभूताम्। सुखेन शोभनेनासनेन स्थीयते यस्यां सा स्वासस्था ताम्। का० स्रुवमभिमृशति भुवपतये स्वाहेति॥ एतन्मन्त्रत्रयस्यायमर्थ:। भुवपत्यादयस्त्रयोऽग्नेर्भ्रातर:। स्वाहाशब्दो निपातो देवान् प्रति दानवाची। स्वाहाकारश्च वषट्कारश्च देवा उपजीवन्तीति श्रुते:। हविर्ग्रहणकाले परिधिभ्यो बहिर्यद्धवि: स्कन्नं तद्भुवपत्यादिभ्योऽग्नेर्भ्रातृभ्यो दत्तमिति मन्त्रार्थ:। पुराग्नेर्भ्रातरो वषट्कारभयाद्भूमिं प्राविशंस्तद्दु:खेनाग्निरपि पलाय्योदके प्राविशत्ततो देवैरानीय स्वाधिकारे स्थाप्यमान एवमवदद् यदेतैर्मद्भ्रातृभिर्मां परिधत्तेषाञ्च यज्ञभाग: कल्प्यमिति। ततस्तेऽग्नेर्भ्रातर: परिधयो जातास्तेषाञ्च स्कन्नं हविर्भाग: कृत इति कथा [ १, ३, ३, १२—१६ ]॥ २॥

ग॒न्ध॒र्वस्त्वा॑ वि॒श्वाव॑सु॒: परि॑दधातु॒ विश्व॑स्या॒रि॑ष्ट्यै॒ यज॑मानस्य परि॒धिर॑स्य॒ग्निरि॒ड ई॑डि॒त:। इन्द्र॑स्य बा॒हुर॑सि॒ दक्षि॑णो॒ विश्व॑स्या॒रि॑ष्ट्यै॒ यज॑मानस्य परि॒धिर॑स्य॒ग्निरि॒ड ई॑डि॒त:। मि॒त्रा॒वरु॑णौ त्वोत्तर॒त: परि॑धत्तां ध्रु॒वेण॒ धर्म॑णा॒ विश्व॑स्या॒रि॑ष्ट्यै॒ यज॑मानस्य परि॒धिर॑स्य॒ग्निरि॒ड ई॑डि॒त:॥ ३॥

का० [ २, ८, १ ] परिधीन् परिदधाति मध्यमदक्षिणोत्तरान् गन्धर्व इति प्रतिमन्त्रमिति॥ आदौ पश्चात्। हे

परिधे! विश्वावसुनामा गन्धर्वः त्वां परिदधातु आहवनीयस्य पश्चात्सर्वतः स्थापयतु। विश्वस्मिन् सर्वस्मिन् प्रदेशे वसतीति विश्वावसुः। यजुलोकस्य सोमं रक्षितुं तत्पार्श्वे सर्वत्र गन्धर्वोऽवसदिति श्रुत्यन्तरकथा। किमर्थं स्थापयतु। विश्वस्या-रिष्ट्यै। रिष हिंसायां रेतस्य रिष्टिः न रिष्टिः अरिष्टिस्तस्यै। आहवनीयस्थानरूपस्य विश्वस्य हिंसापरिहाराय। परिध्य-भावेऽसुराः प्रविश्य हिंसन्ति। किञ्च त्वं यजमानस्य परिधि-रसि। न केवलमग्नेः परिधिः यजमानमप्यसुरेभ्यो रक्षितुं पश्चिमदिशि स्थापितोऽसि। किञ्च अग्निरिड़ः ईडितस्त्वमसि। आहवनीयस्य प्रथमो भ्राता भुवपतिनामाग्निः [illegible] जमासि। ईड्यते स्तूयत इतीड स्तुतियोग्यः। अत एव ईडितः स्तुतो होत्रादिभिः। ईड स्तुतौ॥ दक्षिणं परिधिं परिदधाति। इन्द्रस्य बाहुरसि। हे द्वितीय परिधे! त्वमिन्द्रस्य दक्षिणो बाहुरसि। रक्षणसमर्थत्वादिन्द्रबाहुत्वोपचारः। विश्वस्ये-त्यादि व्याख्यातम्। अत्राग्निशब्देन भुवनपतिनामा द्वितीयो भ्राता॥ तृतीयमुत्तरं परिधिं परिदधाति॥ मित्रावरुणौ। हे तृतीय परिधे! मित्रावरुणौ वाय्वादित्यौ ध्रुवेण स्थिरेण धर्मणा धारणेन उत्तरस्यां दिशि त्वां परिधत्तां परितः स्थापयताम्। विश्वस्येत्यादि पूर्ववत्। अत्राग्निर्भूतानां पतिस्तृतीयो भ्राता॥ ३॥

वीतिहोत्रं त्वा कवे द्युमन्तᳪ समिधी-महि। अग्ने बृहन्तमध्वरे॥ ४॥

का० [२, ८, २] प्रथमं परिधिᳪ समिधोपस्पृश्य वीति-होत्रमित्यादधातीति। गृत्समद् अग्निर्देवता गायत्री छन्दः। हे कवे! क्रान्तदर्शिन्! हे अग्ने! अध्वरे यागे निमित्त

सूर्यस्य बाहू इव भवथः॥ का० [२, ८, १०] तयोः प्रस्तरं स्तृणात्यूर्णम्रदसमितीति। ऊर्णमिव मृदु देवेभ्यो देवानां स्वासस्थं सुखेनासनेन स्थीयते यत्र तादृशं त्वां स्तृणामि॥ का० [२, ८, ११] अभिविदधात्वा त्वा वसव इतीति॥ प्रस्तरं प्रति पाणी निदधाति। वसवो रुद्रा आदित्याः सकलवर्याभिमानिनस्त्रयो देवाः त्वामास्तृणन्तु आसादयन्तु सर्वतः प्रसारयन्तु॥ ५॥

घृताच्यसि जुहूर्नाम्ना सेदं प्रियेण धाम्ना प्रियꣳ सद आसीद। घृताच्यस्युपभृन्नाम्ना सेदं प्रियेण धाम्ना प्रियꣳ सद आसीद। घृताच्यसि ध्रुवा नाम्ना सेदं प्रियेण धाम्ना प्रियꣳ सद आसीद। प्रियेण धाम्ना प्रियꣳ सद आसीद। ध्रुवा असदन्नृतस्य योनौ ता विष्णो पाहि। पाहि यज्ञम्। पाहि यज्ञपतिम्। पाहि मां यज्ञन्यम्॥ ६॥

का० [२, ८, १२, १३] सव्यायुन्ते जुहूं प्रतिगृह्य निदधाति घृताच्येवमितरे उत्तराभ्यां प्रतिमन्त्रमिति। हे जुहु! त्वं घृताची असि। घृतमञ्चति प्राप्नोतीति घृताची घृतपूर्णा भवसि नाम्ना च जुहूः। हूयतेऽनयेति जुहूः। क्विपि श्रुतिकमि—होतीनां द्वे च जुहोतेर्दीर्घश्चेति [पा० का० ३, २, १७८। व० २,.३] द्वित्वं दीर्घश्च। सा त्वं प्रियेण धाम्ना देवतारूपेणानेन सह इदं प्रियं सदः प्रस्तररूपमासीद अधितिष्ठ। एतद्वै देवानां प्रियतमं धाम यदा-

व्यामिति श्रुतेः [ १, ३, ४, १७ ] [illegible]व्यम्। उपभृतं सादयति। उप समीपे स्थित्वा बिभर्ति आज्यं धारयतीत्युप[illegible]त्। व्याख्यातमन्यत्। ध्रुवां सादयति। ध्रुव स्थैर्ये। यथा होमार्थं जु[illegible] पभृतावचलने तद्वदस्याश्चलनाभावेन स्थिरत्वान्नाम्ना ध्रुवा। अन्यद्व्याख्यातम्॥ का० [ २, ८, १९ ] प्रियेण धाम्नेति हवींष्यभि वेद्यां ब्रवीति। हे हविः! प्रियेण धाम्नाऽऽज्येन सह प्रियं सद आसीदेत्येकैकं हविः सम्बोध्य वचनम्। का० [ २, ८, १९ ] ध्रुवा असदन्निति सर्वाण्यालभत इति। ऋतस्याविघ्नत्वाविफलोपेतत्वेन सत्यस्य यज्ञस्य योनौ स्थाने ध्रुवाणि यानि हवींषि असदन्नतिष्ठन्। हे विष्णो! व्यापक यज्ञपुरुष! ता तानि हवींषि पाहि रक्ष यज्ञं च पाहि यज्ञपतिं च पाहि। का० [ २, ८, २० ] पाहि पाहिमित्याश्रामिमिति। यज्ञं नयतीति यज्ञनीः तं यज्ञन्यमध्वर्युं मां पाहि॥ ६॥

अग्ने॑ वाजजि॒द्वाजं॑ त्वा सरि॒ष्यन्तं॑ वाज॒जितं॒ सम्मा॑र्ज्मि। नमो॑ दे॒वेभ्यः॑। स्व॒धा पि॒तृभ्यः॑। सु॒यमे॑ मे भूयास्तम्॥ ७॥

का० [ २, १, ११ ] स्रुवसमार्जनेऽनुवदिधि सम्मार्ज्म्यग्ने वाजजिदिति लिङ्गिः परिमार्गमिति। वाजमन्नं जयतीति वाजजित्। तत्सम्बुद्धौ हे वाजजित्! हे अग्ने! त्वामहं सम्मार्ज्मि शोधयामि। किम्भूतं त्वाम्। वाजं सरिष्यन्तमन्नमुद्दिश्य गमिष्यन्तमन्नसम्पादनाय [illegible]म्। तथा वाजजितमन्नमुद्दिश्य संशोधितमन्नप्राप्ति[illegible] निवारकमित्यर्थः॥ • का० [ २, १, १५ ] अपरमार्जनाया[illegible] करोति नमो देवेभ्य इतीति। ये देवा अनुष्ठानमनुजानन्ति तेभ्यो नमस्करोति। का० [ २, १,

१५] स्वधा पितृभ्य इति दक्षिणत उत्तानमिति। प्राङ्मुखेनादौ देवतार्थमञ्जलिः कृतः इदानीं पितृनत्यर्थं दक्षिणामुख उत्तानमञ्जलिं कुर्यात्। ये पितरः पालकाः सन्ति तेभ्यः स्वधाऽस्तु। स्वधाशब्दो निपातः पितॄनुद्दिश्य देयद्रव्यस्य दाने वर्त्तते। अतो यद्देयं तद्दास्याम इत्यर्थः। अनेन मन्त्रद्वयेन देवाः पितरश्चोपचर्य्यन्ते। का० [२, १, १६] सुयमे म इति जुहूपभृतावादायेति। हे जुहूपभृतौ! मे मदर्थं सुयमे सुष्ठु नियते युवां भूयास्तं भवतम्। यथा युवयोः स्थितमाज्यं न स्कन्दति तथा धारयतमित्यर्थः॥ ७॥

अस्क॑न्नमद्य दे॒वेभ्य॒ आज्य॒ꣳ सम्भ्रि॒यासम्। अङ्घ्रि॑णा विष्णो मा त्वाव॑क्रमिषम्। वसु॑मतीमग्ने ते छायामुप॑स्थेषं विष्णो स्थान॑मसि। इत इन्द्रो॑ वी॒र्य॑मकृणोदू॒र्ध्वो॒ऽध्व॒र आस्था॑त्॥ ८॥

तथा सति अद्यास्मिन्ननुष्ठानदिने देवेभ्यो देवोपकारायाज्यं युवयोः स्थितं घृतम् अस्कन्नं भूमौ यथा न स्कन्दति तथा सम्भ्रियासं सम्यक् पोषणं करोमि धारणं वा। आशीर्लिङि उत्तमे रूपम्॥ का० [२, १, १६] दक्षिणातिक्रामत्यङ्घ्रिणा विष्णवितीति। हे विष्णो! व्यापक यज्ञपुरुष! अङ्घ्रिणा पादेन त्वा त्वाम् अहं मा अवक्रमिषम् अवक्रमणं मा कार्षं पादेनातिक्रमणदोषो मे मा भूदित्यर्थः॥ का० [२, १, १९] वसुमतीमत्यव [illegible]येति। हे अग्ने! ते तव छायां छायावत् समीपवर्त्तिनीं वसुमतीं भूमिम् अहमुपस्थेषम् उपतिष्ठेयं सेवेय। उपपूर्वस्तिष्ठतिः सेवार्थः। स एव सेवाप्रकारः कथ्यते। हे वसुमति! त्वं वि[illegible]र्यज्ञस्य स्थानमसि। अत स्थित्वा याजः

कर्त्तुं शक्यते इत्यर्थः। आह्वनीयसमीपवर्त्तित्वात् अस्या -भेर्यज्ञस्थानत्वम्। यद्वा अयमर्थः। हे अग्ने! ते तव वसुमतीं धनवतीं धनप्राप्तिकरीं छायामाश्रयम् उपस्थेषं सेवेय। छायाशब्द आश्रयवाचकः। युष्मत्पादच्छायायां वसामीति यावत्। यतस्त्वं विष्णोर्यज्ञस्य स्थानमसि॥ का० [ ३, २, १ ] इत इन्द्र इति जुहोतीति। पूर्वमन्त्रे यज्ञसम्बन्धि यत् स्थानमुक्तं तदेव देवानां विजयहेतुत्वादितःशब्देन परामृश्यते। देवयजनव्यतिरिक्तभूमेरसुराधीनत्वेन तत्र देवानां पराजयेऽपि यज्ञप्रदेशः पराजयरहितः। तदेवोच्यते मन्त्रेण। इत इन्द्रः। इन्द्र इतोऽस्माद्देवयजनस्थानात् उद्युक्तः सन्निति शेषः। वीर्य्यमकृणोत् वीरस्य कर्म्म वीर्य्यं असुरवधरूपमकरोत्। अत एवाध्वरो यज्ञ ऊर्द्ध्वमास्थात् उन्नतः स्थितः। इन्द्रेण वीर्य्ये कृते असुरकृतविघ्नाभावादध्वरस्योन्नत्यम्॥ ८॥

अग्ने वेर्होत्रं वेर्दूत्यम्। अवतां त्वां द्यावापृथिवी। अव त्वं द्यावापृथिवी स्विष्टकृद्देवेभ्य इन्द्र आज्येन हविषा भूत् स्वाहा। संज्योतिषा ज्योतिः॥ ९॥

तस्मात् हे अग्ने! त्वं होत्रं वेः। होतुः कर्म्म विद्धि। लङि अड़भावे रूपम्। दूत्यं दूतकर्म्म च वेः विद्धि। होतृत्वं दूतत्वं चाग्नेः कर्म्म। तथा च श्रुतिः [ १, ४, ५, ४ ] उभयं वा एतदग्निर्देवानाᳪ होता च दूतश्चेति। ईदृशं त्वां द्यावापृथिवी अवतां पालयताम्। हे अग्ने! त्वमपि द्यावापृथिवी तावुभय-वती अव पालय। इत्थमन्योन्यपालने सति इन्द्रः आज्येन हविषा [illegible]भिर्दत्तेन देवेभ्यो देवार्थं स्विष्टकृत् भूत्।

सुष्ठु इष्टं करोतीति स्विष्टकृत् तादृशो भवतु। यद्भाक्-
स्वाग्न्देव:। यद्यदस्माभिरिज्यते तत्तदिष्टं सर्वं स्वकार्यं तं
करोत्वित्यर्थः। स्वाहा सुहुतम् अस्तु। इन्द्रं देवमुद्दिश्य इद-
माज्यं दत्तमित्यर्थः। स्वाहेति निपातो देवीद्देशेन दाने वर्त्तते।
का० [३, २, २] जुह्वा ध्रुवां समनक्ति संज्योतिषेति। गच्छताम्-
मित्यध्याहारः। ज्योतिषा ध्रुवास्थिताज्यरूपज्योतिषा सह
ज्योतिर्जुह्वासिच्यमानरूपं ज्योतिः सङ्गच्छताम् ॥ ८ ॥

मयीदमिन्द्रं इन्द्रियं दधात्वस्मान् रायो मघवानः सचन्ताम्। अस्माकं सन्त्वाशिषः सत्या नः सन्त्वाशिषः। उपहूता पृथिवी मातोप मां पृथिवी माता ह्वयताम्। अग्निराग्नीध्रात् स्वाहा ॥ १० ॥

का० [३, ४, २१] आशासने मयीदमिति यजमानो जपतीति। प्रधानयागानन्तरं पुरोडाशशेषप्राशनसमये होतरि आशिषं प्रयुञ्जाने सति यजमानो जपति। इन्द्रः पर-मेश्वर इदमिन्द्रियं मयि दधातु। इदम् अस्मदपेक्षितम् इन्द्रियं वीर्यं मयि यजमाने स्थापयतु। किञ्च रायो धनानि दैव-मानुषभेदेन द्विविधानि मघवानः धनवन्तश्चास्मान् यजमानान् सचन्तां सेवन्ताम्। सच सेवने। किञ्च अस्माकं यजमाना-नामाशिषोऽभीष्टार्थप्रार्थनानि सन्तु विद्यन्ताम्। किञ्च नोऽस्माकमाशिषः पूर्वोक्ताः सत्याः अवितथाः सन्तु। मघमिति धननाम [निघ० २, १०,] तद्विद्यते येषां ते मघवानः। अस्त्यर्थे व-प्रत्ययः [पा० ५, २, १०९] का० [३, ४, १८, १९, २०] एकैकमाहरति द्यावापृथिव्योरुपह्वान-

ऽग्नीधे षड़वत्तम्। प्राश्नात्युपहूता पृथिवीतीति॥ यदा होता द्यावापृथिव्योरुपह्वानं करोति तदोभयोः पुरोडाशयोरैकैक-मंशं षड़वत्ते षड़वत्ते कृत्वाग्नीधे ददाति स चोपहूतेति मन्त्रेण तत् प्राश्नातीति सूत्रार्थः॥ उपहूता येयं पृथिवी दृश्यते सा जगतो माता निर्मात्री मयोपहूता अभ्यनुज्ञाता सा च पृथिवी माता मातृत्वेनास्माभिर्भाविता सती मामु-पह्वयतामनुजानातु हविःशेषभक्षणायाज्ञां ददातु। अहं चाग्नीध्रात्। अग्नीध इदं कर्माग्नीध्रं तस्माद्धेतोरग्निः सन् तं भागं प्राश्नामीति शेषः। स्वाहा सुहुतमस्तु जाठरेऽग्नौ॥ १०॥

उपहूतो द्यौष्पितोप मां द्यौष्पिता ह्वयता-मग्निराग्नीध्रात् स्वाहा। देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्। प्रति-गृह्णामि। अग्नेष्ट्वास्येन प्राश्नामि॥ ११॥

द्वितीयं प्राश्नाति। एवं द्यौः पिता जगत्पालक उपह्व-यतामित्यादि समानार्थम्। देवस्य त्वा। इतः प्रभृति भो प्रतिष्ठेत्यन्तं [ख० १२] ब्रह्मत्वम्। तस्याङ्गिरसो बृहस्प-तिर्ऋषिः॥ का० [२, २, १६] देवस्य त्वेति प्राशित्रं गृह्णा-तीति॥ ब्रह्मा देवस्य त्वेति प्राशित्रं गृह्णाति। मन्त्रो व्याख्यातः। प्रतिगृह्णामि स्वीकरोमीति शेषः। का० [२,२, १८] अग्नेष्ट्वेति प्राश्नाति दन्तैरनुपस्पृशन्निति। हे प्राशित्र! अग्नेः आस्येन वह्निदेवताया मुखेन त्वा त्वां प्राश्नामि भक्षयामि॥ ११॥

एतं ते देव सवितर्यज्ञं प्राहुर्बृहस्पतये

ब्रह्मणे। तेन यज्ञमव तेन यज्ञपतिं तेन मामव ॥ १२ ॥

का० [२, २, २१] एतं त इति समिद्धामन्त्रितः प्रब्रवीतीति। समिधमाधातुमनुज्ञाप्रदानाय बोधितो ब्रह्मा मन्त्रेणानुजानीयात्। एतं त इत्यादिः प्रतिष्ठेत्यन्तो मन्त्रः। हे देव! दानादिगुणयुक्त! हे सवितः! प्रसवितः! एतं यज्ञमिदानीं क्रियमाणमिमं सत्यं ते तुभ्यं त्वदर्थं प्राहुर्यजमानाः कथयन्ति अनुज्ञापयन्तीत्यर्थः। किञ्च त्वया प्रेरितो देवानां यज्ञे यो ब्रह्मा तस्मै ब्रह्मणे बृहस्पतये च प्राहुः। बृहस्पतिर्वै देवानां ब्रह्मा। तदधिष्ठित एवायं मानुषो ब्रह्मत्वं करोति। किञ्च। तेन हेतुना त्वदीयत्वेन यज्ञमव रक्ष। तथा तेनैव हेतुना यज्ञपतिं यजमानं चाव रक्ष। तथा तेनैव हेतुना मां ब्रह्माणमव पालय ॥ १२ ॥

मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोतु। अरिष्टं यज्ञꣳसमिमं दधातु विश्वे देवास इह मादयन्तामो३म्प्रतिष्ठ ॥१३॥

किञ्च। मनो आज्यस्य जुषताम्। कर्मणि षष्ठी। मनः घृतं सेवताम्। हे सवितः! त्वदीयं चित्तं यज्ञसम्बन्धिन्याज्ये स्थापयेत्यर्थः। किम्भूतं मनः। जूतिः। जवतेर्गतिकर्मणो जूतिरिति क्तिन्प्रत्ययान्तो निपातः। दीर्घत्वं छान्दसम्। अतीतानागतवर्त्तमानकालगतपदार्थेषु गमनशीलं हि मनः। जवते शीघ्रं गच्छतीति जूतिः। किञ्च बृहस्पतिरिमं यज्ञं तनोतु विस्तारयतु। ब्रह्मत्वात्। तत इमं यज्ञमरिष्टं

हिंसारहितं कृत्वा सन्दधातु । इडाभक्षणेन हि मध्ये यज्ञो विच्छिन्न इत्येवमुच्यते । किञ्च विश्वे देवासः सर्वे देवा इह यज्ञकर्मणि मादयन्ताम् । मद तृप्तौ चुरादिः । तृप्यन्ताम् । एवं प्रार्थितः सविता देवः ओम्प्रतिष्ठेत्यनुज्ञां प्रयच्छतु । ओमित्यङ्गीकारार्थः । तथास्तु । प्रतिष्ठ प्रयाणं कुरु । समिदाधानकाले यजमानस्याभिप्रेतं प्रयाणमवगम्य सविता देवोऽङ्गीकृत्य प्रयाणे प्रेरयतीत्यर्थः ॥ १३ ॥

ए॒षा ते॑ अग्ने स॒मित्तया॒ वर्ध॑स्व चा च॒ प्याय॑स्व । व॒र्धि॒षी॒महि॑ च व॒यमा च॑ प्यासिषीमहि । अग्ने॑ वाजजि॒द्वाजं॑ त्वा ससृ॒वाꣳसं॑ वाज॒जित॒ꣳ सम्मा॑र्ज्मि ॥ १४ ॥

का० [ ३, ५, २ ] एषा त इति होतानुमन्त्रयत इति । ब्रह्मत्वं समाप्तम् । अतः प्राकृतमार्षम् । इयमनुष्टुबग्निदेवत्या । हे अग्ने ! एषा ते तव समित् समिन्धनहेतुः काष्ठविशेषः । तया समिधा त्वं वर्धस्व वृद्धिं गच्छ । आप्यायस्व च । अस्मानपि सर्वतो वृद्धिं प्रापय । तथा च सति त्वत्प्रसादाद्वयं वर्धिषीमहि वृद्धिं प्राप्नुयाम प्यासिषीमहि च । अस्मदीयपुत्रपश्वादीन् सर्वतो वृद्धान् करवाम ॥ का० [ ३, ५, ४ ] सम्माष्टिं पूर्ववदपरिक्रामꣳसक्कत्सक्कत्सक्कद्वाꣳसमितीति । पूर्वमग्ने वाजजिदिति [ ख० ७ ] मन्त्रेण यथेध्मसन्नहनैरग्नेः सम्मार्गः कृतस्तथात्रापि सम्माष्टिं । तत्र परिक्रम्य त्रिस्त्रिः कृतः । अत्र तु परिक्रमणं विनैकैकवारमिति विशेष इति सूत्रार्थः । मन्त्रो व्याख्यातः । इयान् विशेषः । हे अग्ने ! त्वां

सम्पादितम्। किम्भूतं त्वां वाजं सम्बन्धममन्नमुद्दिश्य गतवन्त-मन्नं सम्पादितवन्तमित्यर्थः। अन्यत् पूर्ववत्॥ १४॥

अ॒ग्नीषोम॑यो॒रुज्जि॑ति॒मनूज्जे॑षं॒ वाज॑स्य मा प्र॒स॒वेन॒ प्रोहा॑मि। अ॒ग्नीषोमौ॒ तमप॑नुदतां॒ योऽस्मान् द्वेष्टि॒ यञ्च॑ व॒यं द्वि॒ष्मो वाज॑स्यैनं प्र॒स॒वेनापो॑हामि। इ॒न्द्रा॒ग्न्योरुज्जि॑ति॒मनूज्जे॑षं॒ वाज॑स्य मा प्र॒स॒वेन॒ प्रोहा॑मि। इ॒न्द्रा॒ग्नी तमप॑नुदतां॒ योऽस्मान् द्वेष्टि॒ यञ्च॑ व॒यं द्वि॒ष्मो वाज॑स्यैनं प्र॒स॒वेनापो॑हामि॥ १५॥

का० [३, ५, १७, १८] जुहूपभृतौ व्यूहत्यग्नीषोमयो-रितीति। तत्र जुहूं प्राचीं प्रेरयति यजमानः। व्यूहनं परस्परविपरीतत्वेनापनोदनम्। अग्नीषोमयोर्द्वितीयपुरो-डाशदेवतयोरुज्जितिमनु अविघ्नेन हविःस्वीकाररूपमुत्कृष्टं जयमनुसृत्याहमुज्जेषमुत्कृष्टं जयं प्राप्तवानस्मि। वाज-स्यान्नस्य पुरोडाशादेः प्रसवेनाभ्यनुज्ञया मां प्रोहामि मां यजमानं जुहूरूपधारिणं प्रोत्साहयामि। यद्यप्यूहतिधातु-र्वितर्कार्थस्तथाप्युपसर्गवशादुत्साहार्थः। अन्यत् पूर्ववत्॥ उप-भृतं प्रतीचीं प्रेरयति। यः शत्रुरसुरादिरस्मादिरस्मान् द्वेष्टि अस्मदीययज्ञविनाशाय द्वेषं करोति। यं च वयं द्विष्मः। यस्मात्स्वादिरूपमस्मदीयानुष्ठानविरोधिनं शत्रुं द्विष्मः विना-शायोद्योगं कुर्मः। तमुभयविधं शत्रुमग्नीषोमौ देवावपनु-दतां निराकुरुताम्। किञ्च। अहमप्येनं द्विविधं शत्रु-मुपभृद्रूपं वाजस्य प्रसवेन पुरोडाशदेवताया अभ्यनुज्ञयापो-

हामि निराकरोमि। उत्तरौ मन्त्रौ दर्शदेवताविषयौ सञ्ज्ञानार्थौ ॥ १५ ॥

वसुभ्यस्त्वा। रुद्रेभ्यस्त्वा। आदित्येभ्यस्त्वा। सञ्जानाथां द्यावापृथिवी। मित्रावरुणौ त्वा वृष्ट्यावताम्। व्यन्तु वयोऽक्तꣳ रिहाणाः। मरुतां पृषतीर्गच्छ वशा पृश्निर्भूत्वा दिवं गच्छ ततो नो वृष्टिमावह। चक्षुष्पा अग्नेऽसि चक्षुर्मे पाहि ॥ १६ ॥

का० [ ३, ५, २४ ] जुह्वा परिधीननक्ति यथापूर्वं वसुभ्य इति प्रतिमन्त्रमिति। हे मध्यमपरिधे! वसुभ्यः वसुदेवताप्रीत्यर्थं त्वा त्वामनज्मीति शेषः। एवं दक्षिणोत्तरपरिधिमन्त्रौ व्याख्येयौ। परिधित्रयाञ्जनेन सवनत्रयदेवताः प्रीयन्त इति भावः॥ का० [ ३, ६, २ ] सञ्ज्ञानाथामिति प्रस्तरादानमिति। हे द्यावापृथिवी! द्युलोकभूलोकदेव्यौ! युवां सञ्ज्ञानाथां गृह्यमाणं प्रस्तरं सम्यगवगच्छतम्। किञ्च हे प्रस्तर! मित्रावरुणौ प्राणापानवायू वृष्ट्या जलवर्षणेन त्वा त्वामवतां रक्षताम्। वायुर्वै वर्षस्येष्टे [ १, ८, ३, १२ ] इत्युक्तत्वाद्वर्षणीयो वायुः स चाध्यात्मगतः प्राणोदानरूपो मित्रावरुणशब्दाभ्यामुच्यते। स च प्रस्तररूपं यजमानं वृष्ट्यावतु। यजमानो वै प्रस्तर इति श्रुतेः। [ १, ८, १, ४४ ]॥ का० [ ३, ६, ४—७ ] अनक्त्येनं व्यन्तु वय इत्यग्रम् [illegible]नुपस्यतीति मध्यं [illegible]मिति। उत्तरस्यां स्रुवायाम्॥ वयः पक्षिणः व्यन्तु। वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु। पक्षिरूपाणि गायत्र्यादीनि छन्दांसि गच्छन्तु। प्र[illegible]इमादिवाते

ग्नेयः। किम्भूताः वयः। अतं रिहाणाः। अतं घृतसिक्तं प्रस्तरं लिहानाः आस्वादयन्तः। रलयोरैक्यम्॥ का० [३, ६, ८] मरुतामिति नीचैर्हुत्वा तृणमादायानुप्रहरतीति। एकं तृणं प्रस्तरात् पृथक्कृत्य प्रस्तरं नीचैर्हुत्वाग्नौ प्रक्षिपेदिति सूत्रार्थः। मरुतामिति प्रस्तरदेवत्या बृहती कपिदृष्टा चतुर्थः पाद आग्नेयः। हे प्रस्तर! त्वं मरुतां पृषतीर्गच्छ मरुन्नामकानां देवानां सम्बन्धिनीः पृषतीर्वाहनरूपा अश्वाश्चित्रवर्णा गच्छ प्राप्नुहि। वायुवाहनवद्वेगेन गच्छेत्यर्थः। अन्तरिक्षं गच्छेत्यर्थः। वशा पृश्निर्भूत्वा। वशा स्वाधीना पृश्निरल्पतनुर्गौर्भूत्वा दिवं गच्छ। कामधेनुवत्तृप्तिकरी भूत्वा स्वर्गं गच्छेत्यर्थः। ततः स्वर्गप्राप्तेरनन्तरं नोऽस्मदर्थं वृष्टिमावह भूलोके वृष्टिमानय। यद्वा। इयं वै वशा पृश्निर्यदिदमस्यां मूलि चामूलं चान्नाद्यं प्रतिष्ठितं तेनेयं वशा पृश्निरिति श्रुतेर्वशापृश्निशब्देन भूमिरुच्यते [१, ८, ३, १५]। वशा पृश्निर्भूत्वा पृथिवी भूत्वा दिवं गच्छ पृथिवीसम्बन्धिभागानादाय द्युलोकं तर्पयेत्यर्थः। हे प्रस्तर! त्वमन्तरिक्षं गत्वा तत्रस्थान्मरुतः सवाहनान् सन्तर्प्य स्वर्गं गत्वा देवांश्च सन्तर्प्य पृथिव्यां वृष्टिं कुर्वित्याहुतिपरिणामः सूचित इति भावः॥ का० [३, ६, १५] चक्षुष्पा इत्यात्मानमालभत इति। हे अग्ने! त्वं यतश्चक्षुष्पा असि। चक्षुः पातीति चक्षुष्पाः। ज्वालयान्धकारं निवर्त्य चक्षुःपालकोऽसि। अतो मे मम चक्षुः पाहि पालय प्रस्तरप्रहरणप्रसक्तं चक्षुष उपद्रवं परिहरेत्यर्थः॥ १६॥

यं प॑रि॒धिं प॒र्यध॑त्था॒ अग्ने॑ देव प॒णिभि॑र्गु॒-ह्यमा॑नः। तं त॑ ए॒तमनु॒ जोषं॑भराम्ये॒ष नेत्त्वद॑प-

चे तयाते । अग्ने॑: प्रियं पाथोऽपी॑तम् ॥ १७ ॥

का० [ ३, ६, १७ ] परिधीननुप्रहरति यं परिधिमिति प्रथममिति । एकादग्निस्त्रयोऽष्टकाश्च विराड्रूपः । प्रथमोऽष्टकः । यं परिधिम् । त्रिष्टुब्विराड्रूपा आग्नेयी यजुरन्ता । अग्ने: प्रियमिति यजुः । देवलदृष्टा ॥ हे अग्ने देव ! आहवनीय ! पणिभिरसुरैः गुध्यमानः । गुध संवरणे संव्रियमाणः संरुध्यमानः सन् त्वं यं परिधिं पश्चिमदिशि पर्यधत्थाः । असुरोपद्रवनिवारणाय परिहितवानसि स्थापितवानसि । ते तव जोषं प्रियं तमेतं परिधिमनु भरामि वह्नौ प्रक्षिपामि । अनुर्भिन्नक्रमः । हरतेर्हस्य भः । एष परिधिः त्वत् त्वत्तः सकाशात् न । इत् एवार्थे नेव अपचेतयाते । मा अपचेतयतु । त्वत्तोऽपगन्तुं मा जानात्वित्यर्थः । त्वय्येव तिष्ठतु । चिती संज्ञाने णिजन्ताल्लेट् । तस्यात्मनेपदे प्रथमैकवचनं तात्तम् । टित आत्मनेपदानामिति [ पा० ३, ४, ७९ ] तस्यैकारः । वैतोऽन्यत्रेति [ पा० ३, ४, ९६ ], लेडेकारस्य पाक्षिक ऐ । लेटोऽडाटावित्याडागमः [ पा० ३, ४, ९४ ] । गुणायादेशौ । अपपूर्वः अपचेतयाते । अपचेतयतु । एष परिधिस्त्वत्तोऽपगतचित्तो मास्त्वित्यर्थः ॥ का० [ ३, ६, १७ ] इतरौ च युगपदग्ने: प्रियमितीति । दक्षिणोत्तरौ परिधी युगपत् प्रक्षिपेत् । हे ??? ! अग्ने: प्रियं पाथः युवामपीतमपिगच्छतम् । पाथ इत्यन्ननाम । [ नि० नै० ६, ७ ] । आहवनीयस्याभिप्रेतमन्नमपिगच्छतम् । अग्नेरन्नत्वं भुवन्नां प्राप्यतामित्यर्थः ॥ १७ ॥

स॒ᳪ॑स्रवभागा स्थे॒षां बृ॒हन्त॑: प्रस्तरे॒ष्ठाः प॑रि॒धेया॑श्च दे॒वाः । इ॒मां वा॑चम॒भि विश्वे॑ गृ॒णन्त॑

प्रास्मिन्न् बर्हिषि मादयध्वम्। स्वाहा वाट्॥ १८॥

का० [ ३, ६, १८ ] संस्रवभागा इति संस्रवान् जुहोतीति वैश्वदेवी त्रिष्टुब्यजुरन्ता। स्वाहा वाडिति यजुः। सोमसूष्म ऋषिः। हे विश्वे देवाः! यूयं संस्रवभागाः स्थ। विलीनसाज्यं संस्रवः। स एव भागो येषां ते संस्रवभागाः। तथाविधा भवथ। तथा बृहा संस्रवलक्षणेनान्नेन बृहन्तो महान्तः स्थ। किञ्च ये प्रस्तरेष्ठाः प्रस्तरे तिष्ठन्तीति प्रस्तरेष्ठाः प्रस्तरस्थायिनः। ये च परिधेयाः परिधिभवाः सन्ति। ते विश्वे देवा इमां मदीयां वाचमभि शृण्वन्तः सर्वत्र वर्षयन्तः। अयं यजमानः सम्यक् यजतीत्येवं सर्वेषां देवानां मध्ये कथयन्तो यूयमस्मिन् बर्हिषि अत्र प्रासद्योपविश्य मादयध्वं तृप्यध्वं मोदयध्वं वा। स्वाहेति वाडिति च शब्दौ हविर्दानार्थौ। सर्वथा दत्तमित्यादरं दर्शयितुं शब्दद्वयप्रयोगः। यद्यपि स्वाहाकारेण वा वषट्कारेण वेति श्रुतेर्वषट्कारो दानार्थः। तथापि देवानां परोक्षप्रियत्वात्प्रत्यक्षत्वपरिहाराय वाडिति शब्दः प्रयुक्तः॥ १८॥

घृताची स्थो धुर्यौ पातꣳ सुम्ने स्थः सुम्ने मा धत्तम्। यज्ञ नमश्च त उप च यज्ञस्य शिवे सन्तिष्ठस्व स्विष्टे मे सन्तिष्ठस्व॥ १९॥

का० [ ३, ६, १९ ] घृताची इति धुरि निदधातीति। जुहूपभृतौ शकटधुरि निदध्यात्। हे जुहूपभृतौ! युवां घृताची स्थः। घृतमञ्चतः प्राप्नुतः इति घृताच्यौ। पूर्वसवर्णदीर्घः। तथाविधे युवां धुर्यावनड्वाहौ पातं रक्षतं धुरं वहतस्तौ धुर्यौ। किञ्च युवां सुम्ने सुखरूपे स्थः भवथः तस्मात्सुम्ने सुखे मा मां धत्तं

ख्यातम् ॥ का० [ २, ६, २१ ] यज्ञ ! नमस्त इति वेदिमालभत इति। अस्य मन्त्रस्य पूर्वे यवमान् कृषिवदादावमान् पात्नान्तर्वानिति पञ्च ऋषयः। यज्ञो देवता। हे यज्ञ! ते तुभ्यं नमः अस्तु उप उपचयो हविश्च तेऽस्तु। चकारावन्योन्यसमुच्चयार्थौ। नम-उपशब्दाभ्यां यज्ञस्य यदतिरिक्तं यच्च न्यूनं जातं तत् पूर्णं जायते। तथा च श्रुतिः। स यदतिरेचयति नमस्कारेण शमयति अथ यदूनं करोत्युप चेति तेन तदन्यूनं नेति। किञ्च। यज्ञस्य शिवे सन्तिष्ठस्व अन्यूनातिरिक्तं यज्ञं कुर्वित्यर्थः। यद्वै यज्ञस्यान्यूनातिरिक्तं तच्छिवं तेन तदुभयं शमयतीति श्रुतेः। मे मम स्विष्टे सन्तिष्ठस्व। साधु इष्टं स्विष्टम्। शोभने यागे तिष्ठसि प्राप्तिं कुर्वित्यर्थः। ॥ १८ ॥

अग्नेऽदब्धायोऽशीतम पाहि मा दिद्योः। पाहि प्रसित्यै। पाहि दुरिष्ट्यै। पाहि दुरद्मन्या अविषं नः पितुं कृणु। सुषदा योनौ स्वाहा वाट्। अग्नये संवेशपतये स्वाहा। सरस्वत्यै यशोभगिन्यै स्वाहा॥ २०॥

का० [ ३, ७, १७ ] स्रुक्स्रुवं अग्नेऽदब्धायोऽद[illegible]। दभ्नोतिः हिंसाकर्मा [ निघ० २, १९, १ ]। आयुरिति मनुष्यनाम [ निघ० २, ३, १७ ]। अदब्धोऽनुपहिंसित आयुर्मनुष्यो यजमानो यस्य सोऽदब्धायुः। अश भोजने। अश्नाति भुङ्क्ते इत्यशी। अश व्याप्तौ अश्नुते व्याप्नोतीत्यशी। अतिशयेन अशितमः। दीर्घश्छान्दसः। हे अदब्धायो। हे अशितम! भोक्तः। यद्वा व्यापकतम।

हे अग्ने गार्हपत्य ! मा मां दिद्योः वज्रात्पाहि । मदनुप्रयुक्ता-द्वज्रसमादायुधाज्ञाम्पाहि । दिद्युरिति वज्रनाम [ निघ० २, २०, १ ]। प्रसित्यै प्रसितेर्बन्धनहेतुभूताज्जालाज्जां पाहि । प्रसितिः प्रसयनात्तन्तुर्वा जालं वेति यास्कः [ निरु० ६, १२ ]। दुष्टा इष्टिर्दुरिष्टिः अयाज्ञीयो यागः । तस्मान्मां पाहि । दुरद्मनी । अदनमद्मनी । दुष्टा अद्मनी दुरद्मनी दुर्भोजनं ततो मां पाहि । चतुर्थ्यर्थः पञ्चम्यर्थे । भीत्रार्थानामिति [ पा० १, ४, २५ ] पञ्चमी । किञ्च नोऽस्माकं पितुमन्नम-विषं कृणु हविर्विषरहितं कुरु । योनिरिति गृहनाम [ निघ० ३, ४ ]। सुष्ठु सद्यते स्थीयते यस्यां सा सुषदा । तस्यां सुषदा विभक्तेराकारः । सम्यगवस्थानयोग्ये गृहे मां स्थापयेति शेषः । यद्वा गृहे स्थितानां नोऽस्माकं पितुमविषं कुरु । स्वाहा वाडिति पदे व्याख्याते । का० [ ३, ७, १८ ] दक्षिणाग्नौ जुहोत्यम्नय इति सरस्वत्या इति चेति । स्त्रीपुंसयोरभिलाषपूर्वकमेकत्र शयनं संवेशः । तस्य पतिर्योऽग्निस्तस्मै स्वाहा हविर्दत्तम् । जीवतः पुरुषस्य प्रशंसा यशः तस्य यशसो भगिनी वाग्रूपा सर-स्वती तस्यै हविर्दत्तम् ॥ २० ॥

वेदोऽसि येन त्वं देव वेद देवेभ्यो वेदो-ऽभवस्तेन मह्यं वेदो भूयाः । देवा गातुवि-दो गातुं वित्त्वा गातुमित । मनसस्पत इमं देव यज्ञꣳ स्वाहा वाते धाः ॥ २१ ॥

का० [ ३, ८, १ ] पत्नी वेदं प्रमुञ्चति वेदोऽसीति । हे कुशमुष्टिनिर्मित पदार्थ ! त्वं वेदोऽसि । पृथगाख्यकोऽसि । यद्वा वेत्तीति वेदः ज्ञातासि । हे देव ! द्योतमानक वेद ! हे

वेद ! येन कारणेन त्वं देवेभ्यः। षष्ठ्यर्थे चतुर्थी। देवानां वेदोऽभवः ज्ञापकोऽभूः तेन कारणेन मह्यं मम वेदो भूयाः ज्ञापको भव॥ का० [ ३, ८, ४ ] समिष्टयजुर्जुहोति देवा गातुविद इतीति। इयं विराट्छन्दस्का वातदेवत्या मनसस्पतिदृष्टा ऋक्। अस्याः पूर्वार्धेन देवता विसृजति। गै शब्दे। गीयते नानाविधैर्वैदिकशब्दैः प्रतिपाद्यते इति गातुर्यज्ञः तं विदन्ति जानन्तीति गातुविदः। हे गातुविदः! यज्ञवेत्तारो देवाः! गातुं वित्त्वा विदित्वा। विद ज्ञाने। अस्मदीयो यज्ञः प्रवृत्त इति ज्ञात्वा। गातुमित यज्ञं प्रत्यागच्छत। यद्वा गातुर्गन्तव्यो मार्गः तं गच्छत। अस्मदीययज्ञेन तुष्टाः सन्तः स्वमार्गं गच्छत। एवं देवान् विसृज्य मन्त्रं प्रत्याह। हे मनसस्पते! मनोऽधिपश्चन्द्रः। यद्वा देवान् यष्टुं मनसः प्रवर्त्तकः परमेश्वरः। तं प्रत्युच्यते। हे मनसस्पते! परमेश्वर! हे देव! इममनुष्ठितं यज्ञं स्वाहा त्वद्धस्ते ददामि। त्वं च तं यज्ञं वाते वायुरूपे देवे धाः स्थापय। वाते हि यज्ञोऽवतिष्ठते। तदुक्तं श्रुत्या। वायुरेवाग्निस्तस्माद्यदेवाध्वर्युर्यज्ञमर्तमं करोत्यथैतमेवाप्येतीति॥ २१॥

सम्बर्हिरङ्क्ताᳪं हविषा घृतेन समादित्यैर्वसुभिः सम्मरुद्भिः। समिन्द्रो विश्वदेवेभिरङ्क्तां दिव्यं नभो गच्छतु यत् स्वाहा॥ २२॥

का० [ ३, ८, ५ ] बर्हिः सम्बर्हिरितीति। बर्हिर्जुहोति। इयमृक् त्रिष्टुप् विराड्रूपा बर्हिर्देवत्या। इन्द्रो हविषा हविःसंस्कारयुक्तेन घृतेन बर्हिः दर्भं समङ्क्ताम्। सम्यगञ्जनोपेतं करोतु सं चेन्द्रः केवलो न। किन्तु आदित्यैर्वसुभिर्मरुद्भिः

विश्वदेवेभिर्विश्वनामकैश्च गणदेवैः अयितः समनक्तम्। सवितृत्वकोपसर्गश्चात्रत्या अनुक्तमिति च क्रियापदस्याध्याहृतिर्बोध्या। वस्त्रादिसहितैरिन्द्रेण समक्तां तद् बर्हिर्यद्दिव्यं नभो आदित्यलक्षणं ज्योतिः तदप्येतु आदित्यं प्राप्नोतु। स्वाहा इदं बर्हिर्देवोद्देशेन दत्तम्। नभः इत्यादित्यनामसु [ निघ० १, ४ ] पठितं दिवि भवं दिव्यम् ॥ २२ ॥

कस्त्वा विमुञ्चति स त्वा विमुञ्चति कस्मै त्वा विमुञ्चति तस्मै त्वा विमुञ्चति। पोषाय ॥ रक्षसां भागोऽसि ॥ २३ ॥

का० [२, ८, ६] वेद्यां प्रणीता निनयति परीत्य कस्त्वेति। व्याख्यातः [ अध्या० १, ६ ] मन्त्रः प्रजापतिदेवतः तत्र यज्ञयोगे नियुक्तः अत्र तु यज्ञविमोके। पोषाय यजमानं पुत्रादिभिः पोषयितुं त्वां निनयामीति शेषः। यज्ञं प्रयुज्याविमोके यजमानस्याप्रतिष्ठापत्तेर्विमोकः कार्यः। यो वै यज्ञं प्रयुज्य न विमुञ्चत्यप्रतिष्ठानो वै स भवतीति श्रुत्यन्तरवचनात् ॥ का० [ २, ८, ७ ] पुरोडाशकपालेन वान्यास्यत्यन्तः कृष्णाजिनमेऽ रक्षसामितीति। हे कणसमूह। त्वं रक्षसां भागोऽसि तेषां नीचजातित्वात्किञ्चित्कणरूपो भागो युक्तः ॥ २३ ॥

संवर्चसा पयसा सन्तनूभिरगन्महि मनसा सꣳशिवेन। त्वष्टा सुदत्रो विदधातु रायोऽनुमार्ष्टु तन्वो यद्विलिष्टम् ॥ २४ ॥

त्वष्टृदेवत्या त्रिष्टुप्। इतः परं याजमानम् ॥ का० [ २, ८, ८—१० ] पूर्णपात्रं निनयति परीत्य अञ्जलौ यजमानोऽ न्येना प्रतिगृह्णाति सं वर्चसेति मुखं विमृष्ट इति।

छन्दोरूपेण स्वकीयपादेन दिवि द्युलोके व्यक्रंस्त विशेषेण क्रमणं कृतवान्। तथा सति ततो द्युलोकात् निर्भक्तो भागरहितः कृत्वा निःसारितः। कः। योऽस्मान्द्वेष्टि यं च वयं द्विष्मः। योऽस्मान् दृष्ट्वा न प्रीयते यं च दृष्ट्वा वयं न प्रीयामहे स द्विविधोऽपि शत्रुर्दिवो निःसारितः। एवमुत्तरावपि विष्णुक्रममन्त्रौ व्याख्येयौ॥ का० [३, ८, १३] अस्मादन्नादिति भागमवेक्षत इति। योऽयम्भागोऽवेक्ष्यते अस्मादन्नाद्यजमानभागान्निर्भक्त इति वाक्यशेषोऽनुवर्त्तनीयः॥ का० [३, ८, १४] अस्यै प्रतिष्ठाया इति भूमिमिति। अवेक्षत इति चतुर्षु मन्त्रविनियोगेष्वनुवर्त्तते। अस्यै अस्याः पुरतो दृश्यमानायाः प्रतिष्ठाहेतोर्यज्ञियभूमेः निर्भक्त इत्यादि पूर्ववत्॥ का० [३, ८, १५] अगन्म स्वरिति प्रागिति। पूर्वस्यां दिशि स्थितं स्वः स्वर्गं सूर्यं वा वयमगन्म प्राप्ताः। यज्ञानुष्ठानेन। का० [३, ८, १६] संज्योतिषेत्याहवनीयमिति। ज्योतिषाहवनाहलक्षणेन वयं समभूम सङ्गता अभूम॥ २५॥

स्वयम्भूरसि श्रेष्ठो रश्मिर्वर्चोदा असि वर्चो मे देहि। सूर्य्यस्यावृतमन्वावर्त्ते॥ २६॥

का० [३, ८, १७] स्वयम्भूरिति सूर्य्यमिति। हे सूर्य्य! त्वं स्वयम्भूरकृतकः स्वयंसिद्धोऽसि। श्रेष्ठो प्रशस्यतमो रश्मिः मण्डलशरीराभिमानी हिरण्यगर्भाख्योऽसि। सूर्य्यस्य सप्त रश्मयः सन्ति। चतुर्दिक्षु चत्वारः एक उपर्य्येकोऽधस्तात् सप्तमो मण्डलाभिमानी हिरण्यगर्भः पुरुषः स श्रेष्ठः स त्वमसि। यतस्त्वं वर्चोदा असि तेजसो दातासि अतो मे वर्चः ब्रह्मवर्चसं देहि॥ का० [३, ८, १८] सूर्य्यस्येत्यावर्त्तते प्रदक्षिणमिति। आवर्त्तनमाहुत्। सूर्य्यस्य

सम्बन्धिनीमावृतमावर्त्तनमनुसृत्याहमपि आवर्त्ते प्रादक्षिण्येनवर्त्तनं करोमि ॥ २६ ॥

अग्ने॑ गृहपते सुगृहप॒तिस्त्वया॑ग्ने॒ऽहं गृह॑पतिना भूयासꣳ सुगृहप॒तिस्त्वं मया॑ग्ने गृह॑पतिना भूया॒: । अ॒स्थू॒रि णौ॒ गार्ह॑पत्यानि सन्तु श॒तꣳ हिमा॒: । सूर्य॑स्या॒वृत॒मन्वावर्त्ते ॥ २७ ॥

का॰ [ ३, ८, २१ ] गार्हपत्यमुपतिष्ठतेऽग्ने गृहपत इति । हे गृहपते ! अस्मदीयगृहस्य पालक ! हे अग्ने ! त्वया गृहपतिना गृहपालकेन कृत्वा त्वत्प्रसादेनेत्यर्थः । अहं सुगृहपतिः शोभनो गृहपतिः भूयासं भवेयम् । तथा हे अग्ने ! त्वमपि मया गृहपतिना मदीयसेवयेत्यर्थः । सुगृहपतिः शोभनो गृहपालको भूयाः भव । अग्ने पदस्यावृत्तिरादरार्था । एवं सति नौ आवयोर्गार्हपत्यानि गृहपतिभ्यां स्त्रीपुरुषाभ्यां निष्पाद्यानि कर्माणि शतं हिमाः वर्षाणि शतवर्षपर्य्यन्तमस्थूरीव सन्तु । निरन्तरमवहितानि प्रवर्त्तताम् । एकपार्श्वे बलीवर्दयुक्तं शकटः स्थूरि न स्थूरि अस्थूरि । लुप्तोपमानम् । बलीवर्दयुक्तं शकटं यथा निरन्तरम् अव्यवहितं प्रसरति तथास्माकं गार्हपत्यानि सन्तु । गृहपतिना संयुक्ते ञ्य [ पा॰ ४, ४, ९० ] इति ञ्यप्रत्ययः ॥ का॰ [ ३, ८, २२ ] सूर्य्यस्येत्यावर्त्तते प्रदक्षिणमिति । व्याख्यातम् ॥ २७ ॥

अग्ने॑ व्रतपते व्र॒तम॑चारिषं॒ तद॑शक॒ तन्मे॑ऽराधि । इ॒दम॒हं य ए॒वास्मि॒ सो॒ऽस्मि ॥ २८ ॥

का॰ [ ३, ८, २९ ] व्रतं विसृजते येनोपेयादिति । व्रत-

ग्रहणे मन्त्रद्वयमुक्तं तयोर्मध्ये येन व्रतादानं कृतं प्रथमेन द्वितीयेन वा। अत्रापि तदनुसारेण व्रतं विसृजेत्। हे अग्ने! हे व्रतपते कर्मपालक! व्रतमचारिषं कर्मानुष्ठितवानस्मि तदशकं शक्तिमान्। त्वत्प्रसादात्तत्कर्मशक्तोऽभवम्। त्वया च तस्मै मदीयं कर्म अराधि साधितम्। द्वितीयो मन्त्रः। हे अग्ने! इदं कर्म समाप्य योऽहं कर्मणः पुरा अस्मि स एव मनुष्योऽस्मि ॥ २८ ॥

इति दर्शपूर्णमासेष्टिमन्त्राः समाप्ताः ॥

अतः परं पिण्डपितृयज्ञमन्त्रास्तेषां प्रजापतिऋषिः ॥

अग्नये कव्यवाहनाय स्वाहा। सोमाय पितृमते स्वाहा। अपहता असुरा रक्षांसि वेदिषदः ॥ २९ ॥

का० [४, १, ७] सारतण्डुलमपूर्णं श्रपयित्वाभिघार्योद्वास्य मेक्षणेन जुहोत्यग्नय इति सोमायेति च। कवयः क्रान्तदर्शिनः पितरस्तेषां सम्बन्धि कव्यं हविः। तद्वोढुमधिकारो यस्यास्ति स कव्यवाहनः। तस्मै अग्नये स्वाहा हविर्दत्तम्। पितृमान् पितृसंयुक्तः तस्मै सोमनामकाय देवाय स्वाहा हविर्दत्तम्। स्वाहाकारेण वषट्कारेण वा देवेभ्योऽप्रदानस्मृतेर्देवाविमौ मन्त्रौ ॥ का० [४, १, ८] दक्षिणेनोल्मुकमत्यप ता इतीति। वेद्यां सीदन्ति वेदिषदः तादृशा असुराः अपहता वेदिसकाशा-दपगताः। तथा रक्षांसि वेद्या अपहतानि। असुरत्वं रक्षस्त्वं चेति जातिविशेषौ देवविरोधिनौ ॥ २९ ॥

ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः

स्वधया चरन्ति । पराःपुरो निपुरो ये भरन्त्य-

ग्निष्टान् लोकात् प्रणुदात्यस्मात् ॥ ३० ॥

का० [ ४, १, ८ ] उल्मुकं परस्तात्करोति ये रूपाणीति । इयं त्रिष्टुप् कव्यवाहनाग्निदेवत्या। स्वधया पितृअन्नेन निमित्तेन पितृणामन्नमस्माभिर्भक्षणीयमिति हेतोः लोक-रूपाणि प्रतिमुञ्चमानाः पितृसमानरूपाणि स्वीकुर्वन्तः सन्तो ये असुराः देवविरोधिनश्चरन्ति पितृयज्ञस्थाने प्रसरन्ति । तथा ये असुराः परापुरः निपुरश्च भरन्ति । पराकृष्टाः पुरः परा-पुरः स्थूलदेहान् । निकृष्टाः पुरः निपुरः सूक्ष्मदेहान् ये धार-यन्ति । स्वमसुरत्वं प्रच्छादयितुं ये स्थूलसूक्ष्मशरीराणि बिभ्रति । अग्निरुल्मुकरूपः । अस्माल्लोकात् पितृयज्ञ-स्थानात्तानसुरान् प्रणुदाति प्रणुदतु प्रेरयतु प्रकर्षेणापसारयत्वि-त्यर्थः ॥ ३० ॥

अत्र पितरो मादयध्वं यथाभागमावृषाय-

ध्वम् । अमीमदन्त पितरो यथाभागमावृषा-

यिषत ॥ ३१ ॥

का० [ ४, १, १३, १४ ] अत्र पितर इत्युक्त्वोदङ्ङास्त आ तमनादादमीमदन्तेति जपतीति । आ तमनात् श्वासनिरोधेन ग्लानिपर्य्यन्तमुदङ्मुख आस्त इति सूत्रार्थः । हे पितरः ! यूयमत्रास्मिन् बर्हिषि मादयध्वं हृष्टा भवत । ततो हविषि यथाभागं स्वं स्वं भागमनतिक्रम्य आवृषायध्वं समन्ताद्वृषवदाचरत । यथा वृषः स्वाभीष्टं घासं प्राप्य तृप्ति-पर्य्यन्तं स्वीकरोति तद्वत् स्वीकुरुत । आङ्पूर्वाद् वृषभा-ख्यातुः क्यङ् सलोपश्चेति [ पा० ३, १, ११ ] क्यङ् ततो लोट् ।

नितरां सम्पादयामि। एवमिन्द्रवाक्यं श्रुत्वोत्तरार्धेन यजमान आह। नितरां ह्रियत इति निहारो मूल्येन क्रेतव्यं पदार्थं ब्रूते। निहारं मूल्येन क्रेतव्यवस्तुरूपं फलं मे मह्यं यजमानाय हरासि प्रयच्छ। लेटोऽडाटावित्याडागमः [ पा० ३, ४, ९४ ]। उत्तरो निहारो मूल्यवाची। निहारं मूल्यभूतं हविः ते तुभ्यमिन्द्राय निहराणि नितरां समर्पयामि। स्वाहाशब्दो हविर्दानार्थः। पूर्वार्धे पादद्वयेनादरेणेन्द्रेण द्विवारं प्रोक्तमर्थमुत्तरार्धेन यजमानः सम्यगङ्गीकरोतीत्यर्थः॥ ५० ॥

अक्षन्नमीमदन्त ह्यव प्रिया अधूषत। अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजा न्विन्द्र ते हरी ॥ ५१ ॥

ऐन्द्रीभ्यां पङ्क्तिभ्यां साकमेधगतपितृयज्ञाख्यकर्मणि आहवनीयोपस्थानम्। यस्या अष्टाक्षराः पञ्च पादाः सा पङ्क्तिः॥ का० [ ५, ९, २१ ] यज्ञोपवीतिनः सर्वे निष्क्रम्योदञ्चोऽक्षन्नमीमदन्तेत्याहवनीयमुपतिष्ठन्ते द्वाभ्यामिति। पितृयज्ञाख्ये कर्मणि ये पितरः सन्ति तेऽस्माभिर्दत्तं हविःस्वरूपमन्नमक्षन् भक्षितवन्तः। कथमेतदवगम्यते। हि यस्मादमीमदन्त हर्षं प्राप्ताः अस्मदीयां भक्तिमवगम्य प्रियाः प्रीतियुक्ताः सन्तः अधूषत स्वकीयं शिरः कम्पितवन्तः। यद्वा प्रियास्तनूरवाधूषत। किञ्च स्वभानवः स्वयं दीप्तियुक्ताः विप्राः मेधाविनः सन्तः नविष्ठया नवतमया मती मत्या बुद्ध्या युक्ताः अस्तोषत स्तुतिं कृतवन्तः। अहो स्वादन्नं अहु उत्तमहो भक्तिरित्यादिभिधानं स्तुतिः। अतो हे इन्द्र! नु क्षिप्रं ते तव हरी एतन्नामकौ हरितवर्णावश्वौ

योज गमनाय रथे योजय। तवाभीष्टाया: पितृतृप्ते: सम्यक्‌-ख्यातै: पितृभि: सह त्वया गन्तव्यमित्यर्थ:। अक्षन्। अदे-र्लुङि लुङ्सनोर्घस्लृ इति [पा० २, ४, ३७] घस्लादेश:। मन्त्रे घसेत्यादिना [पा० २, ४, ८०] च्लेर्लुक्। गमहनेत्यु-पधालोप: [पा० ६, ४, ९८]। खरि चेति [पा० ८, ४, ५५] चर्त्वम्। शासि वसीति [पा० ८, ३, ६०] षत्वम्। अडागम:॥ अमीमदन्त मद तृप्तियोगे चुरादिरात्मनेपदी लुङि णिलोपादौ रूपम्॥ अधूषत धूञ् कम्पने लुङि सिचि व्यत्ययेन गुणाभाव:॥ मती सुपां सुलुगिति [पा० ७, १, ३९] तृतीयाया: पूर्वसवर्णदीर्घ:॥ योज युजिर् योगे व्यत्ययेन ण्यन्तात् लोटि छन्दस्युभयथेति [पा० ३, ४, ११७] शप आर्धधातु-कत्वाण्णेरनिटीति [पा० ६, ४, ५१] णिलोप:। द्व्यचोऽत-स्तिङ इति [पा० ६, ३, १३५] संहितायां दीर्घ:॥ ५१॥

सुसंदृशं त्वा वयं मघवन् वन्दिषीमहि। प्र नूनं पूर्णवन्धुर: स्तुतो यासि वशाँ२॥ अनु योजा न्विन्द्र ते हरी॥ ५२॥

हे मघवन्! वयं त्वा त्वां वन्दिषीमहि स्तुतिकर्त्तारो भूया-स्मेत्याशास्महे। किम्भूतं त्वाम्। सुसंदृशं सुष्ठु सम्यक् पश्यति सुसंदृक् तं शोभनदर्शनम्। अनुग्रहदृष्ट्या सर्वस्य द्रष्टारम्। इत्थमस्माभि: स्तुत: त्वं वशान् कामयमानान् यजमानाननु लक्षीकृत्य नूनं प्र यासि अवश्यं गच्छसि। किम्भूत: पूर्णवन्धुर:। वन्धुरशब्दो रथनीडवाची। स्तोतृभ्यो देयैर्धनै: सम्पूर्णरथनीडो-पेतो भूत्वा गच्छसि। हे इन्द्र! स त्वं ते हरी योजेति पूर्ववत् ॥ ५२॥

मनो न्वाह्वामहे नाराशꣳसेन स्तोमेन।
पितॄणाञ्च मन्मभिः॥ ५३॥

तिस्र ऋचो मनोदेवत्या गायत्र्यो बन्धुदृष्टाः॥ का० [ ५, ८, २२ ] मनो न्वाह्वामह इति गार्हपत्यं तिसृभिरिति। उपतिष्ठन्त इत्यनुवर्त्तते॥ नु क्षिप्रं मन आह्वामहे पितृयज्ञानुष्ठानेन चित्तं पितृलोकं गतमिवासीत् अत आहूयते। यद्वा मनः मनोऽभिमानि दैवतमाह्वामहे आह्वयामः। केन साधनेन स्तोमेन स्तोत्रेण कथम्भूतेन नाराशंसेन। शंसः प्रशंसनं नाराणां मनुष्याणां योग्यः शंसो नराशंसः तत्सम्बन्धी नाराशंसस्तेन। स्तोत्रं द्विविधं दैवं मानुषञ्च। यत्र देवाः स्तूयन्ते तद्दैवं यत्र च मनुष्याः प्रशस्यन्ते तन्मानुषम्। तथाविधेन स्तोत्रेणेत्युक्तं भवति। किञ्च पितॄणाञ्च मन्मभिः पितरो यैः स्तोत्रैर्मन्यन्ते ते मन्मानस्तैः तादृशैः स्तोत्रैराह्वयामः॥ ५३॥

आ न एतु मनः पुनः क्रत्वे दक्षाय जीवसे।
ज्योक् च सूर्य्यं दृशे॥ ५४॥

नोऽस्माकं मनः पूर्वोक्तं चित्तं पुनर्भूयः आ एतु आगच्छतु। किमर्थं क्रत्वे क्रतवे सङ्कल्पाय यज्ञं सङ्कल्पयितुं दक्षाय कर्मसूत्साहाय। तथाच श्रुतिः। तदेव मनसा कामयत इदं मे स्यादिदं कुर्वीयेति स एव क्रतुरथ यदस्मै तत्समृध्यते स दक्ष इति। ज्योगिति निपातश्चिरवचनः। ज्योग्जीवसे चिरं जीवितुम्। सूर्य्यं दृशे च चिरकालं सूर्य्यमवलोकयितुञ्च। एतेषां सङ्कल्पादीनां सिद्धये मनः पुनरागच्छतु॥ क्रत्वे। गुणाभावाद्यणादेशः॥ जीवसे तुमर्थे असेप्रत्ययः॥ दृशे। दृशे विख्ये चेति [ पा० ३, ४, ११ ] साधुः॥ ५४॥

पुन॑र्नः पि॒तरो॒ मनो॒ दर्दातु॒ दैव्यो॒ जनः।
जी॒वं व्रात॑ꣳ सचेमहि ॥ ५५ ॥

हे पितरः! भवदनुज्ञया दैव्यो जनो देवसम्बन्धी पुरुषः सोऽस्मभ्यं मनः पूर्वोक्तं चित्तं पुनर्भूयो ददातु प्रयच्छतु प्रेरयत्वित्यर्थः। तथा सत्यनुष्ठानं कृत्वा भवत्प्रसादाज्जीवं जीवनवन्तं व्रातं पुत्रपश्वादिकं गणं वयं सचेमहि सेवेमहि। सचतिः सेवनार्थः ॥ ५५ ॥

व॒यꣳ सो॑म व्र॒ते तव॒ मन॑स्त॒नूषु॒ बिभ्र॑तः।
प्र॒जाव॑न्तः सचेमहि ॥ ॥ ५६ ॥

सोमदेवत्या गायत्री जपे विनियुक्ता। अत्र पितृयज्ञे सोमनामको देवोऽस्ति। सोमाय पितृमते इत्येवं हविषा विहितत्वात्। हे सोम! वयं यजमानाः तव व्रते कर्मणि वर्त्तमानाः तनूषु भवच्छरीरेषु मनो बिभ्रतः अस्मदीयं चित्तं धारयन्तः त्वत्कारुण्यात् प्रजावन्तः पुत्रपौत्रादिसम्पन्नाः सन्तः सचेमहि सेवेमहि सेवितव्यानि वस्तूनीति शेषः। यद्वा षच् सम्बन्धे सर्वदा त्वत्सम्बद्धा भवेम ॥ ५६ ॥

ए॒ष ते॑ रुद्र भा॒गः स॒ह स्वस्राम्बि॑कया॒ तं जु॑षस्व॒ स्वाहा॑। ए॒ष ते॑ रुद्र भा॒ग आ॒खुस्ते॑ प॒शुः ॥ ५७ ॥

हे रौद्रे यजुषी विंशत्यंसरद्वादशाक्षरे॥ साकमेधगतत्र्यम्बकहविर्विषया मन्त्रा उच्यन्ते। प्रथमस्य यजुषोऽवदानहोमे विनियोगः। तथाच • का० [ ५, १०, १२ ] एष त इति जुहोतीति। रोदयति विरोधिनां गणमिति

रुद्रः। हे रुद्र! ते तव स्वस्रा भगिन्या अम्बिकया अम्बिकानाम्न्या सह एषोऽस्माभिर्दीयमानः पुरोडाशः भागः भजनीयः स्वीकर्त्तुं योग्यः। तं तथाविधं पुरोडाशं त्वं जुषस्व सेवस्व स्वाहा इदं हविर्दत्तं सुहुतमस्तु। अम्बिकाया रुद्रभगिनीत्वं श्रुत्योक्तम् [ २, ६, २, ९, ]। अम्बिका ह वै नामास्य स्वसा तयास्यैष सह भाग इति योऽयं रुद्राख्यः क्रूरो देवस्तस्य विरोधिनं हन्तुमिच्छा भवति तदानया भगिन्या अम्बिकया साधनभूतया तं हिनस्ति। सा चाम्बिका शरद्रूपं प्राप्य ज्वरादिकमुत्पाद्य तं विरोधिनं हन्ति। रुद्राम्बिकयोरुपयुक्तमनेन हविषा शान्तं भवति। तथाच तित्तिरिः। एष ते रुद्र भागः सह स्वस्राम्बिकयेत्याह शरद्वा अस्याम्बिका स्वसा सा वा एषा हिनस्ति यꣳ हिनस्ति तयैवैनꣳ सह शमयतीति। का० [ ५, १० १३ ]। अतिरिक्तमाखूत्कर उपकिरत्येष त इतीति। यजमानस्य यावन्तः पुत्रभ्रात्रादयः पुरुषाः सन्ति तान् गणयित्वा प्रतिपुरुषमेकैकः पुरोडाश इत्येतावतः पुरोडाशान्निरूप्य ततोऽप्यधिकमेकं पुरोडाशं निर्वपेत् सोऽयमतिरिक्त उच्यते। त्र्यम्बकान्निर्वपति रौद्रानेककपालान्यावन्तो यजमानगृह्या एकाधिकानिति कात्यायनोक्तेः [ ५. १०, १. २ ]। तत्र योऽयमतिरिक्तस्तं न जुहुयात् किन्तु मूषकोत्खाते एष त इति मन्त्रेणोपकिरेत्। अथ मन्त्रार्थः। हे रुद्र! एषोऽस्माभिरुपकीर्यमाणोऽतिरिक्तः पुरोडाशः ते भागः त्वया भजनीयः तथा ते तवाखुः पशुः मूषकः पशुत्वेन समर्पितः। आखुदानेन तुष्टो रुद्रस्तयाम्बिकया यजमानपशून्न मारयतीत्यर्थः॥ ५७॥

अव॑ रु॒द्रम॑दीम॒ह्यव॑ दे॒वं त्र्य॑म्बकम्। यथा

नो वस्यसस्करद्यथा नः श्रेयसस्करद्यथा नो व्यवसाययात् ॥ ५८ ॥

द्वे रौद्र्यौ पङ्क्तिककुभौ। यस्या द्वितीयः पादः द्वादशाक्षरः प्रथमतृतीयावष्टाक्षरौ सा ककुप्। इयं जपे विनियोगः। तथा का० [ ५, १०, १४ ]। आगत्याव रुद्रमदीमहीति जपतीति। रुद्रमव। असौ रुद्र इति मनसा तमवगत्यादीमहि त्वदनुग्रहादन्नं भक्षयेम। तथा त्र्यम्बकं त्रीण्यम्बकानि नेत्राणि यस्य तादृशं देवमव त्रिनेत्रोऽयं देव इति मनसावगत्यादीमहीत्यनुवर्तते। यद्वा अदीमहीत्यत्र णिचो लोपश्छान्दसः। अवयुत्यान्यदेवताभ्यः पृथक्कृत्य रुद्रमदीमहि आदयामो भोजयामः। अवगम्य ज्ञात्वा त्र्यम्बकमादयाम इति। यथा येन प्रकारेण नोऽस्मान्वस्यसः करत् वस्तृतरान् वसनशीलानसौ कुर्यात्। यथा च नोऽस्मान् श्रेयसः करत् ज्ञातिषु प्रशस्यतरान् कुर्यात्। यथा चास्मान् व्यवसाययात् सर्वेषु कार्येषु निश्चययुक्तान् कुर्यात्। तथैनं जपाम इत्यर्थः। आशीरियम्॥ अदीमहि छन्दस्युभयथेत्यार्धधातुकत्वाल्लिङि णिचो लोपः [ पा० ३, ४, ११७ ]॥ वस्यसः वसतीति वस्ता ततः अतिशयेन वस्ता वसीयान्। तुश्छन्दसीति [ पा० ५, ३, ५९ ] ईयसुनि कृते तुरिष्ठेमेयःस्विति [ पा० ६, ४, १५४ ] तृणो लोपः। वसीयंस इति प्राप्ते ईलोपश्छान्दसः। करत् छन्दसि लुङ्लङ्लिट इति [ पा० ३, ४, ६ ] लङ् विकरणव्यत्ययेन शपि गुणः। बहुलं छन्दस्यमाङ्योगेऽपीत्यडभावः [ पा० ६, ४, ७५ ]॥ व्यवसाययात् लेटि आडागमे इतश्च लोपः परस्मैपदेष्विति [ पा० ३, ४, ९७ ] इलोपे रूपं विपूर्वस्य ष्यन्तस्य स्यतेः॥ ५८ ॥

भेषजमसि भेषजं गवेऽश्वाय पुरुषाय भेषजम्। सुखं मेषाय मेष्यै ॥ ५९ ॥

हे रुद्र! त्वं भेषजमसि औषधवत्सर्वोपद्रवनिवारकोऽसि। अतोऽस्मदीयेभ्यो गवे अश्वाय पुरुषाय च भेषज्यं सर्वव्याधिनिवारकमौषधं देहि। मेषाय मेष्यै च सुखं देहि। सुहितं खेभ्यः प्राणेभ्य इति सुखम्। अनेन मन्त्रेण गृहपशूनां क्षेमप्राप्तिर्भवति ॥ ५९ ॥

त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्। त्र्यम्बकं यजामहे सुगन्धिं पतिवेदनम्। उर्वारुकमिव बन्धनादितो मुक्षीय मामुतः ॥ ६० ॥

द्वे अनुष्टुभौ। का० [५, १०, १५, १६] अग्निं त्रिः परियन्ति पितृवत्सव्योरूनाघ्नानास्त्र्यम्बकमिति देववच्चैतेनैव दक्षिणानाघ्नाना इति। यथा पितृमेधे पुत्रादयः पुरुषाः स्वकीयान् वामोरूंस्ताडयन्तस्त्रिवारमप्रदक्षिणं परियन्ति। यथा च देवतासेवायां दक्षिणोरूंस्ताडयन्तस्त्रिः प्रदक्षिणं परियन्ति। एवमत्र पुरुषाः प्रथमेनैव त्र्यम्बकमन्त्रेणाग्निमप्रदक्षिणत्रयेण प्रदक्षिणत्रयेण च परियन्तीति सूत्रार्थः॥ मन्त्रार्थस्तु॥ सुगन्धिं दिव्यगन्धोपेतं मर्त्यधर्महीनं पुष्टिवर्धनं धनधान्यादिपुष्टेर्वर्धयितारं त्र्यम्बकं नेत्रत्रयोपेतं रुद्रं यजामहे पूजयामः। ततो रुद्रप्रसादान्मृत्योर्मुक्षीय अपमृत्योः संसारमृत्योश्च मुक्तो भूयासम् अमृतान्मा मुक्षीय स्वर्गरूपान्मुक्तिरूपाच्चामृतान्मा मुक्षीय मुक्तो मा भूयासम्। एकवचनं बह्वर्थे। मुक्ता मा भूयास्मेत्यर्थः।

अभ्युदयनिःश्रेयसरूपात् फलद्वयाम्मम भ्रंशो मा भूदित्यर्थः। मृत्योर्मोचने दृष्टान्तः—उर्वारुकमिव बन्धनादिति। यथोर्वारुकं कर्कन्ध्वादेः फलमत्यन्तपक्वं सत् बन्धनात् स्वस्य वृन्तात् प्रमुच्यते तद्वत्॥ का० [ ५, १०, १७ ] कुमार्यश्चोत्तरेणेति। यजमानसम्बन्धिन्यः कुमार्य्योऽपि पूर्वोक्तपुरुषवदुत्तरेण त्र्यम्बकमन्त्रेणाग्निं त्रिः परियन्ति। त्र्यम्बकं यजामहे कीदृशं पतिवेदनं पतिं वेदयतीति तं भर्त्तुर्लम्भयितारं विद्लृ लाभे। अन्यत् पूर्ववत्। इतो मुक्षीय इतो मातृपितृभ्रातृवर्गान्मुक्षीय मुक्ता भूयासममुतो मा मुक्षीय विवाहादूर्ध्वं भविष्यतः पत्युर्मुक्ता मा भूयासं जनकस्य गोत्रं गृहञ्च परित्यज्य पत्युर्गोत्रे गृहे च सर्वदा त्र्यम्बकप्रसादाद् वसामीत्यर्थः। सा यदित इत्याह ज्ञातिभ्यस्तदाह मामुत इति पतिभ्यस्तदाहेति [ २, ६, २, १४ ] श्रुतेरितोऽमुतःशब्दाभ्यां पितृपतिवर्गौ ग्राह्यौ॥ ६०॥

ए॒तत्ते॑ रुद्राव॒सं तेन॑ प॒रो मूज॑व॒तोऽती॑हि। अव॑ततधन्वा॒ पिना॑कावसः॒ कृत्ति॑वासा॒ अहि॑ꣳसन्नः॒ शि॒वोऽती॑हि॥ ६१॥

रौद्रास्तारपङ्क्तिः। यस्या अन्त्यौ द्वादशाक्षरावाद्यावष्टाक्षरौ पादौ सास्तारपङ्क्तिः॥ का० [ ५, १०, २१ ]। मूतयोः कृत्वा वेणुयष्ट्यां वा कुपे वासज्योभयतः स्थाण्वृक्षवꣳशवल्मीकानामन्यतमस्मिन्नुत्क्षेपणवदासजत्येतत्त इतीति। व्रीहियवादीन् बध्वा वहनार्थं तृणवंशादिनिर्मितः पात्रविशेषो मूतमित्युच्यते। तयोरुभयोर्मूतयोस्त्र्यम्बकान् हविःशेषान् प्रक्षिप्य स्वकीयेनांसेन वोढुं शक्यायां वंशयष्ट्यामग्रद्वये तन्मूतद्वयमवासज्योन्नते स्थाणौ वृक्षे वंशे वल्मीके वा मूतद्वययुतां वंश-

यष्टिं संसृजति। ततो गोभिराघ्रातुमशक्यत्वाद्गावो रोगं न प्राप्नुवन्तीत्यर्थः॥ अथ मन्त्रार्थः। मूजवान्नाम कश्चित् पर्वतो रुद्रस्य वासस्थानम्। अवसशब्देन देशान्तरं गच्छतो मार्गमध्ये तटाकादिसमीपे भोक्तव्य ओदनविशेष उच्यते। हे रुद्र! एतत्ते तव अवसं हविःशेषाख्यं भोज्यं तेन सहितस्त्वं मूजवतः पर्वतात् परः परभागवर्त्ती सन्नतोहि अतिक्रम्य गच्छ। कीदृशस्त्वम्। अवततधन्वा अवरोपितधनुष्कः। अस्मद्विरोधिनां त्वया निवारितत्वादित ऊर्द्ध्वं धनुषि ज्यासमारोपणस्य प्रयोजनाभावादवरोपणमेवेदानीं युक्तम्। तथा पिनाकावसः पिनाकाख्यं त्वदीयं धनुरावस्ते सर्वत आच्छादयतीति पिनाकावसः। यथा धनुर्दृष्ट्वा प्राणिनो न बिभ्यति तथा त्वदीयं धनुर्वस्त्रादिना प्रच्छाद्य गच्छेत्यर्थः॥ का० [५, १०, २२—२३ ]। कृत्तिवासा इत्यनवेक्षमेत्योपस्पृशन्त्यप इति। उक्तं वृक्षादौ भूतद्वयेऽवसज्य प्रत्यावर्त्तमाना भूतद्वयस्यावेक्षणमकृत्वा वेदिसमीपे समागत्योदकं स्पृशेयुरिति सूत्रार्थः। मन्त्रार्थस्तु हे रुद्र! त्वं कृत्तिवासाः चर्माम्बरो नोऽस्मानहिंसन् हिंसामकुर्वन् शिवोऽस्मदीयपूजया सन्तुष्टः कोपरहितो भूत्वा अतीहि पर्वतमतिक्रम्य गच्छ॥ ६१॥

त्र्यायुषं ज॒मद॑ग्नेः क॒श्यप॑स्य त्र्यायु॒षम्।
यद्दे॒वेषु॑ त्र्यायु॒षं तन्नो॑ अस्तु त्र्यायु॒षम्॥६२॥

आशीर्देवतोष्णिक्। यस्याश्चत्वारः पादाः सप्ताक्षराः सोष्णिक्। का० [ ५, २, १६ ] त्र्यायुषमिति यजमानो जपतीति। सोऽयं जपो वपनकालीनः। जमदग्नेः मुनेर्यत्त्र्यायुषं त्रयाणां बाल्ययौवनस्थाविराणामायुषां समाहारस्त्र्यायुषं तथा कश्यपस्यैतन्नामकस्य प्रजापतेः सम्बन्धि यत्त्र्या-

युषं तथा देवेषु इन्द्रादिषु यत्त्र्यायुषमस्ति तत्सर्वं त्र्यायुषं नोऽस्माकं यजमानानामस्तु । जमदग्न्यादीनां बाल्यादिषु यादृशं चरितं तादृशं नो भूयादित्यर्थः ॥ ६२ ॥

शिवो नामा॑सि॒ स्वधि॑तिस्ते पि॒ता नम॑स्ते अस्तु॒ मा मा॑ हिꣳसीः । निव॑र्त्तयाम्यायु॑षे॒ऽन्नाद्या॑य प्रजन॑नाय रा॒यस्पोषा॑य सुप्रजा॒स्त्वाय॑ सुवीर्य्या॑य ॥ ६३ ॥

इति माध्यन्दिनीयायां वाजसनेयिसंहितायां तृतीयोऽध्यायः ॥ ३ ॥

क्षुरदेवतं यजुः । का० [ ५, २, १७ ] शिवो नामेति लोहक्षुरमादायेति । हे क्षुर ! त्वं नाम नाम्ना शिवः शान्तोऽसि स्वधितिः वज्रं ते तव पिता । ते तुभ्यं नमोऽस्तु मां मा हिंसीः । का० [ ५, २, १७ ] निवर्त्तयामीति वपतीति । यजमानदेवतं यजुः । निपूर्वो वृतिर्मुण्डनार्थः । हे यजमान ! त्वां निवर्त्तयामि मुण्डयामि किमर्थमायुषे जीवनाय अन्नाद्यायान्नभक्षणाय प्रजननाय सन्तानाय रायो धनस्य पोषाय पुष्ट्यै सुप्रजास्त्वाय शोभनापत्यतायै सुवीर्य्याय शोभनसामर्थ्याय ॥ ६३ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
अग्न्याधानादिपितृयाज्ञान्तस्तृतीयोऽध्याय ईरितः ॥ ३ ॥

## चतुर्थोऽध्यायः ।

एदमगन्म देवयजनं पृथिव्या यत्र देवासो अजुषन्त विश्वे । ऋक्सामाभ्याꣳ सन्तरन्तो यजुर्भी रायस्पोषेण समिषा मदेम । इमा आपः शमु मे सन्तु देवीः । ओषधे त्रायस्व । स्वधिते मैनꣳ हिꣳसीः ॥ १ ॥

आधानाग्निहोत्राग्न्युपस्थानचातुर्मास्यमन्त्रास्तृतीयाध्याये [ क० १—८, ९—१०, ११—४३, ४४—६३ ] प्रोक्ताः । चतुर्थाध्यायमारभ्याष्टमस्य द्वात्रिंशत्कण्डिकापर्य्यन्तमग्निष्टोममन्त्रा उच्यन्ते । तेषां प्रजापतिर्ऋषिः । तत्र चतुर्थे यजमानसंस्कारपूर्वकं सोमक्रयमन्त्राः प्राधान्येनोच्यन्ते तत्रादौ यजमानः षोडशर्त्विजो वृत्वारण्योरग्नी समारोप्य शालां गच्छेत् ॥ तथा च का० [ ७, १, ३६ ] समारोह्याग्नी शालास्तम्भं पूर्वार्द्धं गृहीत्वारणिपाणिरादैदमगन्मेति । द्वे अत्यष्टी व्यवसाने । तयोः कण्डिकयोः सप्त मन्त्राः । आद्यावर्धर्चौ देवयजनदेवत्यौ ॥ आ इदम् अगन्मेति पदानि । व्यवहिताश्चेति [ पा० १, ४, ८२ ] उपसर्गक्रियापदयोर्व्यवधानम् । इदमिति हस्तेन प्रदर्श्यते । वयमिदं पृथिव्याः सम्बन्धि देवयजनं देवा इज्यन्ते यस्मिन् तद्देवयजनं स्थानम् आ अगन्म आगताः स्मः । गच्छतेर्लङ्युत्तमबहुवचने व्यत्ययेन शपो लुकि मो नो धातोरिति [ पा० ८, २, ६४ ] मस्य नः । अडागमस्य । इदं किम् । यत्र देवयजने विश्वे देवासः सर्वे देवाः अजुषन्त अप्रीयन्त प्रीत्या स्थिता इत्यर्थः । किञ्च ।

वयं रायो धनस्य पोषेण पुष्ट्या इषा इष्यमाणेनान्नेन च संमदेम। मदी हर्षे व्यत्ययेन शप्। हृष्टा भवेम धनैरन्नैश्च तृप्येम। किं कुर्वन्तः। ऋक्सामाभ्यामृक् च साम च ऋक्सामे अचतुरेति [ पा० ५, ४, ७७ ] सूत्रेणाजन्तो निपातः। ताभ्यां यजुर्भिश्च वेदत्रयगतमन्त्रैः सन्तरन्तः समुद्रवद्गम्भीरं सोमयागं समापयन्त इत्यर्थः॥ का० [ ७, २, ८ ] दक्षिणं गोदानं वितार्योनत्तीमा आप इति। इमा आपः। आपो देवताः। इमा आपः शिरःक्लेदाय सिच्यमाना एता आपो मे मम यजमानस्य शमु। उ एवार्थे। शं सुखार्थमव्ययम्। शं सुखकारिण्य एव सन्तु भवन्तु। किम्भूता आपः। देवीः देव्यः दीव्यन्ति ताः देव्यः। द्योतना निर्मला इत्यर्थः। का० [ ७, २, १०, ११ ] यूपवत् कुशतरुणं क्षुरेण चाभिनिधाय छित्त्वेति। यथा पश्वर्थयूपस्य छेदे मन्त्रः एवमत्रापि तृणान्तर्धानं क्षुरस्थापनञ्च मन्त्रद्वयेन कर्त्तव्यमिति सूत्रार्थः। ओषधे। कुशतरुणं देवता। हे ओषधे! कुशतरुण! त्वं यजमानं त्रायस्व क्षुराद्रक्ष। स्वधिते। क्षुरो देवता। हे स्वधिते क्षुर! एनं यजमानं मा हिंसीः॥ १ ॥

आपो॑ अ॒स्मान्मा॒तरः॑ शुन्धयन्तु घृ॒तेन॑ नो घृत॒प्वः॑ पुनन्तु। विश्व॒ꣳ हि रि॒प्रं प्र॒वह॑न्ति दे॒वीः। उदि॒दा॑भ्य॒ शुचि॒रा पू॒त ए॑मि। दी॒क्षा॒त॒पसो॑स्त॒नूर॑सि॒ तां त्वा॑ शि॒वाꣳ श॒ग्मां परि॑दधे भ॒द्रं वर्णं॒ पुष्य॑न्॥ २॥

का० [ ७, २, १५ ] आपो अस्मानिति स्नात्वेति। मातरः

मिमते ता मातरो जगन्निर्मात्र्यो मातृवत्पालयित्र्यो वा आपः अस्मान् कृतक्षौरान् यजमानान् शुन्धयन्तु शुन्ध शुद्धौ शोधयन्तु क्षौरकर्मनिमित्तामपहतिं निवारयन्त्वित्यर्थः। किञ्च घृतप्वः घृ क्षरणे जिघर्ति क्षरति घृतं तेन क्षरितजलेन पुनन्तीति घृतप्वः जलदेवतास्ताश्च घृतेन क्षरितजलेन नोऽस्मान् पुनन्तु शुद्धान् कुर्वन्तु। किञ्च। देवीः द्योतमाना आपो विश्वं हि। हि एवार्थः। सर्वमेव रिप्रं पापं प्रवहन्ति प्रकर्षेणापनयन्तु। रपो रिप्रमिति पापनामनी भवत इति यास्कः [ निरु० ४, २१ ]॥ का० [ ७, २, १५ ] उदिदाभ्य इत्युत्क्राम्यत्युत्तरपूर्वार्धमिति। अहमाभ्योऽप्सुः उदेमि इत् इदेवार्थे उत्क्राम्येव। जलाद्विर्गच्छामीत्यर्थः। किम्भूतोऽहं शुचिः शुद्धः स्नानेन। तथा आपूतः समन्ताद्भावेनान्तरपि शुद्ध आचमनेन। शुचिरापूत इति शब्दाभ्यां स्नानाचमनाभ्यां बहिरन्तश्च शुद्धिरुक्ता॥ का० [ ७, २, १६—१८ ] क्षौमं वस्ते निष्पेष्टवै ब्रूयादहतं चेदद्भिरभ्युक्ष्य स्नातवस्त्रं वाऽसौत्रधौतं विचितकेशं प्रसारितदशं दीक्षातपसोरिति॥ दीक्षातपसोः। वासो देवता। हे क्षौम वस्त्र! त्वं दीक्षातपसोस्तनूरसि दीक्षा दीक्षणीयेष्टिः तप उपसदिष्टिः। दीक्षाभिमानिदेवतायास्तपोऽभिमानिदेवतायाश्च त्वं शरीरवत् प्रियमसि। तां दीक्षातपसोस्तनूं तद्देवताद्वयशरीरभूतां त्वामहं परिदधे धारयामि। किम्भूतां त्वां शिवां शग्मां द्वयोरपि शब्दयोः सुखवाचकत्वादत्यन्तसुखरूपां कोमलत्वात्। किम्भूतोऽहम्। भद्रं वर्णं पुष्यन् त्वत्परिधानेन कल्याणीं कान्तिं पुष्यन्॥ २॥

महीनां पयोऽसि वर्चोदा असि वर्चो मे

देहि । वृत्रस्यासि कनीनकश्चक्षुर्दा असि चक्षु
र्मे देहि ॥ ३ ॥

का० [ ७, २, ३३ ] शालां पूर्वेण तिष्ठन्नभ्यङ्क्ते कुशेषु नवनीतेन शीर्षाद्यनुलोमं सपादको मह्मीनां पयोऽसीति । प्राचीनशालापूर्वभागेषु कुशेषु स्थित्वा नवनीतं गृहीत्वा शिरस आरभ्य पादान्तं शरीराभ्यङ्गं कुर्य्यादिति सूत्रार्थः । मह्मीनां पयः । नवनीतमुच्यते हे नवनीत ! त्वं मह्मीनां गवां पयोऽसि । मह्मीति गोनामसु पठितम् [ निघ० २, ११, ५ ] । नवनीतस्य क्षीरजन्यत्वात् पयस्त्वोपचारः । वर्च्चोदा असि । वर्च्चो ददातीति वर्च्चोदाः । अतिस्निग्धत्वेन कान्तिप्रदमसि पुंस्त्वमापन्नमतो मे मह्यं यजमानाय वर्च्चो देहि कान्तिं प्रयच्छ ॥ का० [ ७, २, ३४ ] वृत्रस्येत्यक्ष्यावनक्ति त्रैककुदाञ्जनेनाभावेऽन्यदिति । त्रिककुत्पर्वतादुत्पन्नाञ्जनं लभ्यते चेत्तेनाक्षिद्वयमञ्ज्यात्तदभावेऽन्यदप्यञ्जनं ग्राह्यमिति सूत्रार्थः । वृत्रस्य । अञ्जनं देवता । हे अञ्जन ! त्वं वृत्रस्यासुरस्य कनीनकोऽसि नेत्रमध्यगतकृष्णमण्डलरूपोऽसि । यत्र वा इन्द्रो वृत्रमहंस्तस्य यदक्ष्यासीदित्यादिश्रुतिः [ ३, १, ३, १२ ] । तथा च तित्तिरिः । इन्द्रो वृत्रमहन् तस्य कनीनिका परापतत्तदेवाञ्जनमभवदिति । चक्षुर्दा असि कनीनिकारूपत्वात्त्वं दृष्टिप्रदोऽसि अतो मे मह्यं चक्षुर्देहि सम्यग्दृष्टिपाटवं प्रयच्छ ॥ ३ ॥

चित्पतिर्मा पुनातु । वाक्पतिर्मा पुनातु ।
देवो मा सविता पुनात्वच्छिद्रेण पवित्रेण

**सूर्य॑स्य र॒श्मिभिः॑। तस्य॑ ते पवित्रपते प॒वित्र॑पूतस्य॒ यत्का॑मः पुने तच्छ॑केयम् ॥ ४ ॥**

का० [ ७, २, १ ] कुशपवित्रैः चित्पतिर्मेति पावयति सप्तभिः सप्तभिः प्रतिमन्त्रमच्छिद्रेणेति सर्वत्रेति। अच्छिद्रेणेति शेषस्त्रिष्वपि मन्त्रेष्वनुषज्यते। चित्पतिर्मा। चितां ज्ञानानां पतिश्चित्पतिर्मनोऽभिमानी देवो मा मां यजमानं पुनातु शोधयतु मनो वै चित्पतिरिति तित्तिरिवाक्यात्। यद्वा चित्पतिः प्रजापतिः प्रजापतिर्वै चित्पतिरिति श्रुतेः [ ३, १, २, २२ ]। किंभूताच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः किरणैः। वायुरच्छिद्रं पवित्रं शुद्धिहेतुत्वात् छिद्ररहितत्वाच्च यद्वादित्यमण्डलमच्छिद्रं पवित्रम्। असौ वा आदित्योऽच्छिद्रं पवित्रमिति श्रुतेः। हे पवित्रपते! पवित्रान् शुद्धान् पाति पवित्रपतिस्तत्सम्बुद्धौ हे पवित्रपते! शुद्धपालक! ते पवित्रपूतस्य तव पवित्रेण पूर्वोक्तेन शुद्धस्य तस्य यजमानस्याभीष्टं भूयादिति शेषः। तदेव स्पष्टयति। यत्कामोऽहं पुने तत् शकेयम् यः कामो यस्य यत्कामः यद्वा यस्मिन् कामो यस्य स यत्कामः सोमयागानुष्ठाने कामवानहं पुने आत्मानं शोधयामि तत्सोमयागानुष्ठाने शक्तो भूयासम्। यज्ञानुष्ठानसामर्थ्यं मेऽस्त्वित्यर्थः॥ वाक्पतिः वाचां पतिर्बृहस्पतिर्मा मां पुनातु॥ सविता देवोऽन्तर्यामी मा मां पुनातु। एतन्मन्त्रद्वयं पूर्ववद्योज्यम्॥ ४ ॥

**आ वो॑ दे॒वास॒ ईमहे वा॒मं प्र॑य॒त्यध्व॒रे। आ वो॑ देवास आ॒शिषो॑ य॒ज्ञिया॑सो हवामहे ॥ ५ ॥**

का० [ ७, २, ६ ] आ वो देवास इति वाचयतीति। अध्वर्युर्यजमानं वाचयति। देवी अनुष्टुप् आशीः। हे देवासः! देवाः! वयं वो युष्मान् वामं वननीयं यज्ञफलम् आ ईमहे साकल्येन याचामहे। वन्यते भज्यत इति वामम्। वन सम्भक्तौ। मप्रत्ययः। ईमहे याचतिकर्मसु पठितः द्विकर्मकः [ निघ० ३, १९, १ ]। क्व। सति अध्वरे अस्मदीये यज्ञे प्रयति प्रवर्त्तमाने सति। प्रैतीति प्रयन् तस्मिन् प्रपूर्वादिणः शतरि रूपम्। किञ्च हे देवासो! देवाः! वो युष्मान् वयं हवामहे आह्वयामः। किं कर्त्तुं यज्ञियासः। यज्ञस्येमा यज्ञिया यज्ञमध्यस्थिनीराशिषः फलानि आ आनेतुं समानेतुमित्यर्थः। उपसर्गेण धातुरध्याहर्त्तव्यः। यज्ञफलं प्राप्तुं युष्मानाह्वयाम इत्यर्थः॥ ५॥

स्वाहा॑ य॒ज्ञं मन॑सः॒। स्वाहो॒रोर॒न्तरि॑क्षात्। स्वाहा॒ द्यावा॑पृथि॒वीभ्या॑म्। स्वाहा॒ वाता॒दार॑भे॒ स्वाहा॑॥ ६॥

का० [ ७, ३, ७—१० ] स्वाहा यज्ञमित्यङ्गुली अचते नामाङ्गस्तयोरेकं प्रैषं प्रतिमन्त्रं मुष्टी कृत्वा स्वाहेत्युक्त्वा वाग्यतोऽङ्गुष्ठौ तत्सहिते चोत्सृजतीति॥ आद्यमन्त्रेण कनिष्ठिकादिद्वयं सङ्कोचयति एवमन्यत्रयेणान्याः। स्वाहा वातादारभ इत्युत्तमेन मुष्टिद्वयं कुर्यादिति सूत्रार्थः॥ स्वाहा यज्ञम्। चतुर्णां यजुषां यज्ञो देवता। स्वाहाशब्दस्य निपातत्वेनानेकार्थत्वादुचिता अर्था. ब्राह्मणानुसारेण ग्राह्याः। तथाहि। स्वाहा यज्ञं मनसः। मनस इति पञ्चमी तृतीयार्थे मनसा यज्ञं स्वाहा चित्तेन यज्ञमभिगच्छामि अत्र स्वाहाशब्दोऽभिगमनार्थः॥ स्वाहोरोरन्तरिक्षात्। पञ्चमी

समस्यर्थे उरो विस्तीर्णेऽन्तरिक्षे स्वाहा यज्ञ आश्रितः। स्वाहा शब्दो यज्ञार्थोऽतः प्रभृति॥ स्वाहा द्यावापृथिवीभ्याम्। द्यावापृथिव्योः स्वाहा यज्ञः श्रितः। लोकत्रयव्यापी यज्ञ इत्यर्थः॥ स्वाहा वातादारभे। वाताद्वायुप्रसादात् स्वाहा यज्ञमारभे प्रवर्त्तयामि। वायोः सर्वकर्मप्रवर्त्तकत्वात्॥ स्वाहा यज्ञ एवं सिद्ध इति शेषः॥ ६॥

आकूत्यै प्रयुजेऽग्नये स्वाहा। मेधायै मनसेऽग्नये स्वाहा। दीक्षायै तपसेऽग्नये स्वाहा। सरस्वत्यै पूष्णेऽग्नये स्वाहा। आपो देवीर्बृहतीर्विश्वशम्भुवो द्यावापृथिवी उरो अन्तरिक्ष। बृहस्पतये हविषा विधेम स्वाहा॥ ७॥

अतः परं षडौद्ग्रभणहोममन्त्राः। चतुर्णामग्निर्देवता। का० [ ७, ३, १६ ] औद्ग्रभणानि जुहोति स्थाल्याः स्रुवेणाकूत्या इति प्रतिमन्त्रमिति। आकूत्यै प्रयुजेऽग्नये स्वाहा। अग्नये वह्निदेवाय स्वाहा सुहुतमिदमस्तु। किम्भूतायाग्नये आकूत्यै प्रयुजे। यज्ञं करिष्यामीत्येवंविधो मानसः सङ्कल्प आकूतिः तस्यै तत्सम्पूर्त्यै प्रयुजे प्रयुङ्क्तेऽसौ प्रयुक् तस्मै। सङ्कल्पसिद्ध्यै निर्विघ्नं प्रेरयते इत्यर्थः। इति प्रथमो मन्त्रः॥ मेधायै मनसेऽग्नये स्वाहा। श्रुतयोर्मन्त्रयोर्धारणशक्तिर्मेधा तत्सिद्धयर्थं मनसे मदीयमनोऽभिमानिनेऽग्नये स्वाहा सुहुतमस्तु। विद्याधारणशक्तिर्हि मनसः स्वास्थ्ये सत्येव भवति। इति द्वितीयः॥ जपति। दीक्षायै तपसेऽग्नये स्वाहा। व्रतनियमो दीक्षा तत्सिद्धयर्थं मदीयशरीरतपोऽभिमानिनेऽ-

ऽग्नये स्वाहा । नियमसंरक्षणं तपसैव भवति । ततस्तपोदात्रे इत्यर्थः । इति तृतीयः ॥ सरस्वत्यै पूष्णेऽग्नये स्वाहा । मन्त्रोच्चारणशक्तिः सरस्वती तत्सिद्ध्यर्थं पूष्णे पुष्णातीति पूषा तस्मै वागिन्द्रियपोषकायाग्नये हुतमस्तु । इति चतुर्थः ॥ आपो देवीः । लिङ्गोक्तदेवता विराट् यस्या एकादशाक्षराः त्रयः पादाः सा विराट् । दशकास्त्रयो विराडेकादशका वेत्युक्तेः । अत्र प्रथमो द्वादशार्णस्तेनैकाधिका । हे आपः ! हे द्यावापृथिवी ! द्याव्यापृथिव्यौ ! हे उरो विस्तीर्ण अन्तरिक्ष ! युष्मभ्यं बृहस्पतये च हविषा विधेम हविर्दद्मः । द्वितीयार्थे तृतीया । विधतिर्दानकर्मा । स्वाहा सुहुतमस्तु । किंभूता आपः । देवीः देव्यो द्योतमानाः बृहतीः बृहत्यः प्रभूताः उभयत्र पूर्वसवर्णः । विश्वशम्भुवः विश्वस्य जगतः शं सुखं भावयन्ति जनयन्ति वा विश्वशम्भुवः । इति पञ्चमो मन्त्रः ॥७॥

विश्वो॑ दे॒वस्य॑ ने॒तुर्मर्त्तो॑ वुरीत स॒ख्यम् । विश्वो॑ रा॒य इ॑षुध्यति द्यु॒म्नं वृ॑णीत पु॒ष्यसे॒ स्वाहा॑ ॥ ८ ॥

अथ षष्ठः । सवितृदेवत्यानुष्टुप् स्वस्त्यात्रेयदृष्टा । विश्वो मर्त्तः सर्वो मनुष्यो नेतुः फलप्रापकस्य देवस्य दानादिगुणयुक्तस्य सवितुः सख्यं सखिभावं वुरीत वृणुते प्रार्थयते । वृञ् वरणे अस्माल्लिङि तङि प्रथमैकवचने व्यत्ययेन शपो लुकि उदोष्ठ्यपूर्वस्येति [ पा० ७, १, १०२ ] ऋत उदादेशः । किञ्च विश्वः सर्वो जनो राये धनाय इषुध्यति सवितारं प्रार्थयते । इषुध्यतिर्याच्ञाकर्मसु पठितः [ निघ० ३, १९, १४ ] । किञ्च द्युम्नं द्योततेर्यशो वाऽन्नं वा तच्च वृणीत प्रार्थयते । किमर्थं पुष्यसे पोषाय स्वप्रजापालनाय । पुषेस्तुमर्थे असेप्रत्ययः । यः

इत्थम्भूतः सविता तस्मै स्वाहा । इति षष्ठ औदग्रभणमन्त्रः ।
समाप्तास्ते ॥ ८ ॥

ऋक्सामयोः शिल्पे स्थस्ते वामारभे ते मा पातमास्य यज्ञस्योदृचः । शर्मासि शर्म मे यच्छ नमस्ते अस्तु मा मा हिꣳसीः ॥ ९ ॥

का० [ ७, ३, २३ ] कृष्णाजिनयोः सन्धिमालभत ऋक्सामयोरितीति ॥ कृष्णाजिने देवते । हे कृष्णाजिनगते शुक्लकृष्णरेखे ! युवामृक्सामयोः शिल्पे स्थः ऋगभिमानिसामाभिमानिदेवतयोः सम्बन्धिनी शिल्पे चातुर्य्ये तद्रूपे भवतः । यद्वै प्रतिरूपं तच्छिल्पमिति श्रुतेः [३, २, १, ५] । ते वां तथाविधे युवामारभे अहं स्पृशामि ते मा पातं तथाविधे युवां मा मां पालयतम् । कियन्तं कालमिति चेत्तदाह । अस्य यज्ञस्य आ उदृचः उत्तमा चरमा ऋगुदृक् तस्या उदृचः आ तत्पर्य्यन्तं पञ्चम्यपाङ्परिभिरिति [ पा० २, ३, १० ] पञ्चमी । एतद्यज्ञसमाप्तिपर्य्यन्तमित्यर्थः । ऋक्सामाभिमानिन्यौ देवते देवानां यज्ञार्थं स्थिते सत्यौ केनापि निमित्तेन कृष्णमृगरूपं कृत्वा देवेभ्यः पलाय्य दूरे कुत्राप्यतिष्ठतां तन्मृगचर्मणि यच्छुक्लं तदृचो रूपं यत् कृष्णं तत् साम्नो रूपम् । तदुक्तं तित्तिरिणा [ ६, १, ३ ] । ऋक्सामे वै देवेभ्यो यज्ञार्थं तिष्ठमाने कृष्णमृगरूपं कृत्वापक्राम्यातिष्ठतामेष वा ऋचो वर्णो यच्छुक्लं कृष्णाजिनमस्यै साम्नो यत् कृष्णमिति ॥ का० [ ७, ३, २४ ] दक्षिणजानुमारोहति शर्मासीति । हे कृष्णाजिन ! त्वं शर्म शरणमसि । अतो मे मह्यं शर्म शरणं यच्छ देहि । स्वकीयत्वेन स्वीकुर्वित्यर्थः । ते तुभ्यं कृष्णाजिनाय नमोऽस्तु मा मां यजमानं मा हिंसीः मा जहि ॥ ९ ॥

ऊर्गस्याङ्गिरस्यूर्णम्रदा ऊर्जं मयि धेहि।
सोमस्य नीविरसि। विष्णोः शर्मासि शर्म
यजमानस्य। इन्द्रस्य योनिरसि। सुसस्याः
कृषीस्कृधि। उच्छ्रयस्व वनस्पत ऊर्ध्वो मा
पाह्यꣳहस आस्य यज्ञस्योदृचः॥ १०॥

का० [ ७, ३, २६ ] मेखलां बध्नीते वेणिं त्रिवृतꣳ शण-मुञ्जमिश्रामन्तरां वासस ऊर्गसीति। अङ्गिरोभिदृष्टं मेखलं यजुः। हे मेखले! त्वमाङ्गिरसी अङ्गिरोनामकानामृषीणां सम्बन्धिनी ऊर्क् अन्नरसरूपासि। किम्भूता ऊर्णम्रदाः ऊर्णेव म्रदीयसी कम्बलवत् मृदुरसि। तथाविधा त्वमूर्ज-मन्नरसं मयि धेहि स्थापय। अङ्गिरसः स्वर्गं लोकं गच्छन्तो-ऽन्नरसं व्यभजन्त विभज्यमानेऽवशिष्टोऽन्नरसो भूमौ पतितः शणमुञ्जनामकतृणरूपेणाविर्भूतस्तस्माच्छणमुञ्जमयी मेखला अत एव मेखलाया आङ्गिरसत्वमिति तित्तिरिणा प्रत्यपादि॥ का० [ ७, ३, २७ ] नीविं कुरुते सोमस्य नीविरिति। हे मेखले! त्वं सोमस्य नीविरसि सोमदेवतायाः प्रियभूता ग्रन्थिरसि। मूलाग्रयोरेकीकरणेन ग्रन्थिविशेषो नीविरुच्यते। अदीक्षितस्य पितृदेवत्या नीविरुक्ता दीक्षितस्य तु सोमयागाय नीविः सोमेन व्यपदिश्यते। का० [ ७, ३, २८ ] शिरः प्रोर्णुते विष्णोः शर्मेति। हे वस्त्र! त्वं विष्णोः व्यापकस्य यज्ञस्य शर्मासि सुखहेतुर्भवसि अतो यजमानस्य शर्म सुखं कुर्विति शेषः। का० [ ७, ३, २९—३१ ] कृष्णविषाणां त्रिवलिं पञ्चवलिं वोत्तानां दशायां बध्नीते तथा कण्डूयनमुपस्पृशत्ये-नया दक्षिणस्या भ्रुव उपरीन्द्रस्य योनिरसीति। हे कृष्ण-

विषाणे! त्वं यथा पूर्वमिन्द्रस्य योनिरसि तथेदानीं यजमानस्य स्थानं भवति शेषः। पुरा कदाचिद्यज्ञपुरुषो दक्षिणां देवीं समभवत्तस्मात्सम्भावनादिन्द्रोऽजायत तदानीमन्यस्योत्पत्तिर्मा भूदिति विचार्येन्द्रः स्वां योनिं दक्षिणाया आच्छिद्य मृगेषु न्यदधात् निहिता सा योनिः कृष्णमृगाणामभूदिति तित्तिरिश्रुतौ यज्ञो दक्षिणामभ्यध्यादित्याख्याने कथा तस्मात् कृष्णविषाणाया इन्द्रयोनित्वम्॥ का० [ ७, ३, ३२ ] भूमौ चोल्लिखति सुसस्या इतीति। हे कृष्णविषाणे! त्वं कृषीः सुसस्याः कृषि कुरु। किरतेः ग्रपि लुङे शुङ्क्विल्यादिना [ पा० ६, ४, १०२ ] हेर्धिः। शोभनं सस्यं यासु ताः सुसस्याः। सस्यं व्रीहियवादि। तदर्थो भूम्युल्लेखः कृषिः यजमानानां कृषयः सन्ति ताः सर्वाः शोभनधान्याः कुर्वित्यर्थः॥ का० [ ७, ४, १—२ ] मुखसम्मितमौदुम्बरं दण्डं प्रयच्छत्युच्छ्रयस्वेत्येमच्छ्रयतीति। दण्डो देवता। हे वनस्पते! वृक्षावयव दण्ड! उच्छ्रयस्व उन्नतो भव। ऊर्ध्वो भूत्वा अंहसः पापात् मा मां पाहि रक्ष तत्र कालावधिरुच्यते। अस्मानुह्यमानस्य यज्ञस्य उदृचः उत्तमायाः समाप्तिगतायाः ऋचः आ तदृक्पर्यन्तमित्यर्थः॥ १०॥

व्रुतं कृणुताग्निर्ब्रह्माग्निर्यज्ञो वनस्पतिर्यज्ञियः। दैवीं धियं मनामहे सुमृडीकामभिष्टये। वर्चोधां यज्ञवाहसꣳ सुतीर्था नो असद्वशे। ये देवा मनोजाता मनोयुजो दक्षक्रतवस्ते नोऽवन्तु ते नः पान्तु तेभ्यः स्वाहा॥ ११॥

का० [ ७, ४, १५ ] व्रतं कृणुतेति वाग्विसर्जनं विरक्ता ति। मौनोपस्थितस्य यजमानस्यैतन्मन्त्रोच्चारणं वाग्विसर्जनसाधनम्। हे परिचारकाः! व्रतं कृणुत दोहनादिना क्षीरं सम्पादयत। दीक्षितस्य भोजनाय यन्नियतं पयस्तद् व्रतमित्युच्यते। वाक्यावृत्तिरादरार्था॥ का० [ ७, ४, १५ ] अग्निर्ब्रह्मेति च सकृदिति। एतमपि मन्त्रं सकृत् पठेत्। अग्निर्ब्रह्म ब्रह्मशब्देन वेदत्रयमभिधीयते तस्य वेदत्रयस्याग्नित्वमुपचर्य्यते। आधानेन निष्पन्नस्य वैदिकस्याग्नेर्वेदव्यतिरेकेणासम्भवात्। तस्मादयं श्रौतोऽग्निर्ब्रह्मैव वेदरूप एव॥ अयमग्निर्यज्ञः तस्य अग्नेर्यज्ञसाधनत्वाद्यज्ञत्वमुपचर्य्यतेऽग्निर्यज्ञ एवेति॥ वनस्पतिः। यज्ञियः यज्ञयोग्यो यो वनस्पतिः खादिरादिः सोऽपि यज्ञ इत्यनुवर्त्तते वनस्पतेर्यज्ञसाधनत्वाद्यज्ञत्वम्। तथा च श्रुतिः [ ३, २, २, ८ ]। न हि, मनुष्या यजेरन्यद्वनस्पतयो न स्युरिति॥ का० [ ७, ४, ३२ ] दैवीं धियमिति व्रतायोपसर्गनश्च् खासन इति। शक्करी अतिशक्करी वा। पूर्वार्धेनाचमनम्! वयं धियं मनामहे यज्ञानुष्ठानविषयां बुद्धिं याचामहे। मनामह इति याच्ञाकर्मसु पठितः [ निघ० ३, १८, १६ ]। किमर्थमभिष्टये अभि समन्ताद्यजनमभिष्टिः। अभिपूर्वस्य यजतेः क्तिनि आदिलोपः। अभिमुखत्वेन सामस्त्या यज्ञस्य सिद्धर्थम्। किम्भूतां धियं दैवीं देवसम्बन्धिनीं देवोद्देशेन प्रवृत्तामित्यर्थः। तथा सुमृडीकाम् सुष्ठु मृडयति सुमृडीका ताम् शोभनसुखहेतुम्। तथा वर्चोधां वर्चो दधाति वर्चोधास्तां तेजसो धारयित्रीम्। तथा यज्ञवाहसम् यज्ञं वहति निर्वाहयति तां यज्ञनिर्वाहककर्त्रीम्। तथाविधा धीः सुनावी सुखेन तरीतुं प्राप्तुं शक्या सुतीर्था यद्वा सुष्ठु तीर्थमवतरणमार्गो यस्यां सा। एवंविधा

यतो नो वशे असत् अस्माकमधीनत्वे भवतु। का० [७, ४, ३३] ये देवा इति व्रतयत्यमृण्मय इति। ये देवा! दीव्यन्ति द्योतन्ते त इति देवाश्चक्षुरादीन्द्रियरूपाः प्राणाः। वागेवाग्निः प्राणोदानौ मित्रावरुणौ चक्षुरादित्यः श्रोत्रं विश्वे देवा इति [३, २, २, १३] श्रुत्युक्ताः। किञ्च ताः मनोजाताः दर्शनश्रवणादीच्छारूपान्मनस उत्पन्नाः इच्छोत्पत्तौ तेषां प्रवर्त्तमानत्वात्। तथा मनोयुजः रूपादिदर्शनकालेऽपि मनसा युक्ता एव वर्त्तन्ते। अन्यमनस्कस्य रूपादिप्रतिभासाभावात्। यद्वा स्वप्नावस्थायां मनसा युज्यन्ते ते मनोयुजः। तथा दक्षक्रतवः दक्षाः कुशलाः क्रतवः सङ्कल्पाः येषां ते सङ्कल्पितार्थकारिण इत्यर्थः। ते देवा नोऽस्मानवन्तु यज्ञानुष्ठानविघ्नपरिहारेण पालयन्तु तेभ्यः प्राणरूपेभ्यः देवेभ्यः स्वाहा इदं घोरं हुतमस्तु ॥ ११ ॥

श्वात्राः पीता भवत यूयमापो अस्माकमन्तरुदरे सुशेवाः। ता अस्मभ्यमयक्ष्मा अनमीवा अनागसः स्वदन्तु देवीरमृता ऋतावृधः ॥ १२ ॥

का० [७, ४, ३५] श्वात्रा पीता इति नाभिमालभत इति। अब्देवत्या जगती। हे आपः! क्षीररूपा यूयं मया पीताः सत्यः श्वात्राः क्षिप्रपरिणामाः शीघ्रं जीर्णा भवत। श्वात्रमिति क्षिप्रनामाशु अतनं भवतीति यास्कः [निरु० नै० ५, ३]। किञ्च अस्माकं पीतवतामन्तरुदरे जलपाकस्थाने सुशेवाः शोभनसुखाः भवतेत्यनुवर्त्तते। सुष्ठु शेवं याभ्यस्ताः। शेवमिति सुखनाम [निघ० ३, ६, १७]। किञ्च। तास्त-

थाविधा आप अस्मभ्यमस्मदुपकारार्थं स्वदन्तु स्वादुत्वयुक्ता भवन्तु। किम्भूतास्ताः। अयक्ष्माः प्रबलरोगराजरहिताः। अनमीवाः सामान्यरोगनिवर्त्तिकाः। नास्त्यमीवा याभ्यः। अनागसः नास्त्यागो याभ्यः अपराधहारिण्यः। ऋतावृधः ऋतं वर्धयन्ति ऋतवृधः संहितायाम् ऋतस्य दीर्घः। यज्ञवृद्धिहेतवः। देवीः देव्यो द्योतमानाः। अमृताः नास्ति मृतं याभ्यः मरणनिवर्त्तिकाः॥ यद्वायमर्थः। ता इति द्वितीयाबहुवचनम्। अमृताः अमरणधर्मिणो देवा पूर्वोक्ताः प्राणा वागादयस्ता अपः स्वदन्तु आस्वादयन्तु। कीदृशीः अस्मभ्यमस्माः अस्मदर्थमस्माकं वा यक्ष्मनाशिनीः। शेषं पूर्ववत् ॥ १२ ॥

इयं ते यज्ञिया तनूः। अपो मुञ्चामि न प्रजाम्। अꣳहोमुचः स्वाहाकृताः पृथिवीमाविशत। पृथिव्या सम्भव॥ १३ ॥

का० [ ७, ४, ३६ ] मेक्ष्यन् कृष्णविषाणया लोष्टं किञ्चिद्धादत्त इयं त इति। मूत्रं करिष्यन् शृङ्गेण लोष्टं किञ्चित् तृणादिकं वा गृह्णातीति सूत्रार्थः। हे यज्ञपुरुष! इयं पृथिवी ते तव यज्ञिया तनूः यज्ञयोग्या देहः। अतोऽस्या मूत्रोपहतिपरिहाराय व्यवधानं कर्तुं लोष्टं तृणं वा स्वीकरोमीति भावः। यद्वा पृथिवीं प्रत्युच्यते। हे पृथिवि! इयं लोष्टरूपा ते तव यज्ञार्हा तनूस्तामाददे इति शेषः॥ का० [ ७, ४, ३७ ] अपो मुञ्चामीति मेहतीति। अपो मूत्ररूपा अहं मुञ्चामि न प्रजां प्रजोत्पत्तिनिमित्तं रेतो न मुञ्चामि। अतो हे आपः! मूत्राख्या यूयं पृथिवीमाविशत प्रविशत। किम्भूताः। अंहोमुचः अंहसः पापान् मुञ्चन्ति पुरुषं

पृथक्कुर्वन्तीत्यर्थः। तथा स्वाहाकृताः पूर्वं क्षीरपानकाले स्वाहेति मन्त्रेण स्वीकृताः। यद्वा स्वाहाकृताः सत्यो भूमिमाविशत। का० [ ७, ४, ३८ ] पृथिव्या सम्भवेत्यात्तं निदधातीति। गृहीतलोष्टादिकं मूत्रस्थाने क्षिपेत्। हे लोष्टादिक ! पृथिव्या सह त्वं सम्भव एकीभव ॥ १३ ॥

अग्ने त्वꣳ सुजागृहि वयꣳ सुमन्दिषीमहि। रक्षा णो अप्रयुच्छन् प्रबुधे नः पुनस्कृधि ॥ १४ ॥

का० [ ७, ४, ३९ ] अग्ने ! त्वमित्युक्त्वा स्वपित्यधः प्राङ्दक्षिणत इति। अनुष्टुबाग्नेयी। हे अग्ने ! त्वं सुजागृहि सुष्ठु निद्रारहितो भव। वयं यजमानाः सुमन्दिषीमहि साधु स्वप्स्यामः। मदि मोदस्तुतिस्वप्नकान्तिगतिषु [ धा० २, १२ ] अत्र स्वप्नार्थः। आशीर्लिङ्युत्तमबहुवचने रूपम्। किञ्च। नोऽस्मान् रक्ष किं कुर्वन्नप्रयुच्छन्। युछ प्रमादे। अप्रमाद्यन्। द्व्यचोऽतस्तिङ इति [ पा० ६, ३, १३५ ] संहितायां दीर्घः। नश्च धातुस्थोरुषुभ्य इति [ पा० ८, ४, २७ ] न इत्यस्य णत्वम्। नो अप्रयुच्छन्नित्यत्र एङः पदान्तादतीति [पा० ६, १, १०९ ] पूर्वरूपे प्राप्ते प्रकृत्यान्तःपादमव्यपर इति [ पा० ६, १, ११५] प्रकृतिभावः। किञ्च अग्ने ! नोऽस्मान् पुनः प्रबुधे प्रबोधाय कृधि कुरु प्रबोधनं प्रभुत्वस्यै प्रबुधे सम्पदादित्वाद्भावे क्विप्। स्वपतोऽग्नेः प्रार्थनं रक्षसां नाशाय। तदुक्तं तित्तिरिणा। अग्निमेवाधिपं कृत्वा स्वपिति रक्षसामपहत्या इति ॥ १४ ॥

पुनर्मनः पुनरायुर्म आगन् पुनः प्राणः पुनरात्मा म आगन् पुनश्चक्षुः पुनः श्रोत्रं म आगन्।

वैश्वानरो अदब्धस्तनूपा अग्निर्नः पातु दुरितादवद्यात् ॥ १५ ॥

का० [ ७, ४, ३० ] निवृत्तमसगएकान्त पुनर्मन इति वाचयतीति। मे मम यजमानस्य मनः पुनरागन् सुप्तिकाले विलीय पुनरिदानीं शरीरं समागतम्। गमेर्लुङि अपि लुप्ते हल्ङ्याब्भ्य इति [ पा० ६, १, ६८ ] प्रत्ययलोपे मकारस्य नकारे प्रथमैकवचने आगन्निति रूपम्। किञ्च स्वापकाले मे मदीयमायुर्नष्टप्रायं भूत्वा पुनरागन् इदानीं पुनरुत्पन्नमिवासीत् तथा मे प्राणो वायुः पुनरागन् तथा मे आत्मा जीवः पुनरागन् तथा मे चक्षुः पुनरागन् तथा मे श्रोत्रं श्रवणेन्द्रियं पुनरागन्। सर्वं ह वा एते स्वपतोऽपक्रामन्तीति श्रुतेः [ ३, २, २, २३ ] स्वापकाले मनआदीनामपक्रमो भवति। तेषां पुनर्यथास्थानसमागमनं प्रार्थ्यते। एवं सर्वेन्द्रियेषु समागतेषु अयमग्निः अवद्यात् वदितुमयोग्यात् निन्दितात् दुरितात् पापात् नोऽस्मान् पातु पालयतु। यद्वा अवद्यात् दुर्यशसो दुरितात् पापाच्च पातु। किम्भूतोऽग्निः। वैश्वानरः विश्वेभ्यो नरेभ्यो हितः सर्वपुरुषोपकारकः। नरे सञ्ज्ञायामिति [ पा० ६, ३, १२९ ] पूर्वपददीर्घः। अदब्धः केनाप्यहिंसितः तनूपाः तनूं पातीति अस्मदीयशरीरपालकः ॥ १५ ॥

त्वमग्ने व्रतपा असि देव आ मर्त्येष्वा त्वं यज्ञेष्वीड्यः। रास्वेयत्सोमा भूयो भर देवो नः सविता वसोर्दाता वस्वदात् ॥ १६ ॥

का० [ ७, ५, १, २] त्वमग्न इत्याह क्रतुद्वावत्यं वा व्याहृ-

त्येति। दीक्षितो यदा क्रुध्यति व्रतविरुद्धं वा ब्रूते तदा त्वमग्ने इत्यृचं जपेत्। गायत्र्याग्नेयी वत्सदृष्टा। व्यूहेनाक्षरपूरणम्। हे अग्ने! देवो द्योतनात्मकः त्वमा मर्त्येषु मनुष्यपर्यन्तेषु सर्वप्राणिषु व्रतपा असि व्रतस्य कर्मणः पालको भवसि। तथा आ समन्ताद्यज्ञेषु त्वमीड्योऽसि। ईडिरध्येषणाकर्मा वेति यास्कः। याचितव्यः पूजयितव्यो वा भवसि। अतः पाहीति शेषः। यद्वा आकारद्वयं समुच्चयार्थं देवे इति सप्तम्यन्तं पदं हे अग्ने! त्वं देवे आ देवेषु च मर्त्येषु आ मनुष्येषु च व्रतपा असीति शेषं पूर्ववत्॥ का० [ ७, ५, १६ ] लब्धमालभ्य वाचयति रास्वेयदिति। क्रतौ प्राप्तं धनं स्पृष्ट्वा मन्त्रं पठेत्। रास्व। सोमदेवत्यं यजुः। हे सोम! इयद्रास्व एतावद्धनं देहि भूयः पुनरपि आभर धनम् आहर। हृग्रहोरिति [ पा० ८, २, ३२ वा० १ ] भकारः। यतो वसोर्धनस्य दाता सविता देवो नोऽस्मभ्यं वसु अदात् पूर्वमपि धनं दत्तवान्॥ १६॥

एषा ते शुक्र तनूरेतद्वर्चस्तया सम्भव भ्राजं गच्छ। जूरसि धृता मनसा जुष्टा विष्णवे॥ १७॥

का० [ ७, ६, ७—८ ] शालाद्वार्यमपिधाय ध्रौवं जुह्वां चतुर्विगृह्णाति बर्हिस्तृणेन हिरण्यं बद्धावदधात्येषा त इतीति। ध्रुवास्थमाज्यं जुह्वां चतुर्गृहीत्वा तत्राज्ये दर्भतृणबद्धं स्वर्णं क्षिपेदिति सूत्रार्थः। एषा ते। हिरण्याज्यदेवतम्। हे शुक्र! शुक्ल दीप्यमानाग्ने! ते तव एषा तनूः दृश्यमानमाज्यं शरीरम्। एतत् आज्ये प्रक्षिप्यमाणं हिरण्यं ते वर्चः त्वदीयं तेजः। तया सम्भव आज्यरूपया तन्वा

एकीभव । ततो भ्राजं गच्छ भ्राज दीप्तौ हिरण्यगतां दीप्तिं प्राप्नुहि । एतन्मन्त्रपाठेनाग्नेः सतेजस्त्वं सतनुत्वं च सम्पद्यते । तदुक्तं तित्तिरिणा । सतेजसमेवैनं सतनुं करोतीति । यद्वायमर्थः । हे शुक्र आज्य ! एषा हिरण्यलक्षणा ते तनूः एतत्ते वर्चः । समानजन्म वै पयश्च हिरण्यं चोभयं ह्यग्निरेतसमिति [ ३. २, ४, ८ ] श्रुतेः । तया हिरण्यलक्षणया तन्वा सम्भव एकीभूय भ्राजं गच्छ । भ्राजतेऽसौ भ्राट् तम् । सोमो वै भ्राडिति [ ३, २, ४, ८ ] श्रुतेः । का० [ ७, ६, ८ ] जूरसीति जुहोतीति । वाग्देवतम् । हे वाक् ! त्वं जूरसि वेगयुक्तासि यद्वा जीव प्राणधारणे । जीवयतीति जूः । डूप्रत्ययः । किम्भूता त्वं मनसा धृता नियमिता । तथा विष्णवे जुष्टा यज्ञो वै विष्णुः । यज्ञार्थं प्रीतियुक्ता ! यद्वा षष्ठ्यर्थे चतुर्थी । यज्ञस्य रुचिता ॥ १७ ॥

तस्यास्ते सत्यसवसः प्रसवे तन्वो यन्त्रमशीय स्वाहा । शुक्रमसि चन्द्रमस्यमृतमसि वैश्वदेवमसि ॥ १८ ॥

सत्यं सवो यस्याः सा सत्यसवाः तस्याः सत्यसवसोऽवितथाभ्यनुज्ञायास्तस्यास्ते तथाविधायास्तव वाचः प्रसवेऽनुज्ञायां वर्त्तमानोऽहं तन्वः शरीरस्य यन्त्रं नियमनं दार्ढ्यमशीय प्राप्नुयाम् । स्वाहा इदमाज्यं हुतमस्तु ॥ का० [ ७, ६, १० ] शुक्रमसीति हिरण्यमुद्धृत्य वेद्यां तृणं निदधातीति । जुह्वां बद्धा स्थापितं हिरण्यमुद्धरेत । शुक्रमसि । हिरण्यं देवता । हे हिरण्य ! त्वं शुक्रमसि शोचते शुक्रम् । शुच दीप्तौ । दीप्यमानमसि । तथा चन्द्रमाह्लादकमसि । चदि आह्लादने । चन्दतीति चन्द्रम् । अमृतं विनाशरहितमसि । अग्निसंयो-

गेऽपि हिरण्यस्य विनाशाभावः प्रसिद्धः। अग्नौ सुवर्णमक्षोयमिति याज्ञवल्क्योक्तेः। वैश्वदेवमसि। विश्वेषां देवानामिदं वैश्वदेवं सर्वदेवसम्बन्धि। सर्वोऽपि देवो हिरण्यदानेन तुष्येत्॥ ५८॥

चिद॑सि म॒नासि॒ धीर॑सि॒ दक्षि॑णासि क्ष॒त्रिया॑सि य॒ज्ञिया॒स्यदि॑तिरस्युभयतःशी॒र्ष्णी। सा नः॒ सुप्रा॑ची॒ सुप्र॑तीच्ये॒धि मि॒त्रस्त्वा॑ प॒दि ब॑ध्नीतां पू॒षाध्व॑नस्पा॒त्विन्द्रा॒याध्य॑क्षाय॥ १९॥

का० [ ७, ६, १५ ] चिदसीत्येनामभिमन्त्रयत इति। कण्डिकाद्वयेन एनां सोमक्रयणीमित्यर्थः। वाग्रूपाध्यारोपकल्पनया सोमक्रयणी गौः स्तूयते। हे वाग्देवतारूपे सोमक्रयणि! त्वं चिदसि मनासि धीरसि। अन्तःकरणस्य चित्तमनोबुद्धय इति तिस्रो वृत्तयः। तल्लक्षणानि। अचेतनदेहादिसङ्घातस्य चेतनत्वं सम्पादयन्ती बाह्यवस्तुषु वा निर्विकल्परूपं सामान्यज्ञानं जनयन्ती वृत्तिश्चित्तं तदेवात्र चिदित्युच्यते। लोके कश्चित् पदार्थं दृष्ट्वा एवं भवति न वेति सङ्कल्पविकल्पौ कुर्वाणा वृत्तिर्मनः तदेवात्र मनेत्युच्यते। इदमित्थं भवत्येवेति निश्चयरूपा वृत्तिर्बुद्धिः सैवात्र धीशब्देनोच्यते। वागात्मिका सोमक्रयणी चिन्मनोधीरूपत्वेन प्रशस्यते। चिदादिरूपत्वमारोप्य स्तुतिः कृता। दक्षिणादिरूपत्वं तु विद्यमानमेव स्तूयते। हे गौः! त्वं दक्षिणासि। गवां देयद्रव्यत्वेन कर्मसु दक्षिणात्वं प्रसिद्धम्। यद्वा वाग्दानस्य प्रशस्तत्वाद्दक्षिणासि। भूमिदानात् परं नास्ति विद्यादानं ततोऽधिकमिति स्मृतेः। तथा क्षत्रियासि। सोमक्रयसाधनत्वेन। तथा हि। देवेषु क्षत्रजात्यभिमानी सोमः। तदुक्तं

बृहदारण्यके [ माध्य० १, २, १३ काण्व० १, ४, ११ ] यान्ये-तानि देवता क्षत्राणीन्द्रो वरुणः सोमो रुद्र इति। तेन सोमेन क्षत्रेणाभिमन्त्र्यस्य सोमलताद्रव्यस्य क्रयहेतुत्वेन लं क्षत्रियासि। तद्रूपं चास्याः क्रयद्वारा तत्सम्बन्धित्वादुप-चर्यते। अत एव यज्ञसम्बन्धित्वाद्यज्ञिया यज्ञार्हासि। अदितिः अखण्डिता अदीना देवमातृरूपासि। नास्ति दितिर्यस्याः सा। अदितिरदीना देवमातेति यास्कः [ निरु० नै० ४, २२ ] तथा उभयतःशीर्ष्णी। उभयतः शीर्षे यस्याः सा ज्योतिष्टोमस्याद्यन्तयोः प्रायणीयोदयनीययोः शीर्षत्वम्। द्वे शीर्षे प्रायणीयोदयनीये इति यास्कोक्तेः [ निरु० ११, ७ ]। यद्वोभयतःशीर्ष्णी सर्वतोमुखी वाग्रूपत्वात्। स यदेनया समानं सद्विपर्यासं वदतीति [ ३, २, ४, १६ ] श्रुतेः। सा पूर्वोक्ता चित्तादिरूपा त्वं नोऽस्मदर्थं सुप्राची सुप्र-तीची च एधि भव। सुष्ठु प्राङ्च्चति सुप्राची। सुष्ठु प्रत्यङ्ङ्-च्चति सुप्रतीची। प्रथमं सोमस्य क्रेतारं प्रति सुष्ठु प्राङ्मुखी भूत्वा पश्चात्सोमेन सहास्मान् प्रत्यागन्तुं सुष्ठु प्रत्यङ्मुखी भवे-त्यर्थः। तथा च श्रुतिः [ ३, २, ४, १७ ]। सुप्राची न एधि सोमं नोऽच्छेहीत्येवैतदाह सुप्रतीची न एधि सोमेन नः सह पुनरेहीत्येवैतदाहेति। किञ्च मित्रः सूर्यः पदि दक्षिण-पादे त्वा त्वां बध्नीतां बन्धनं करोतु अप्रपलायाय। तथा पूषा पोषको देवः सूर्य एवाध्वनो मार्गात्पातु त्वां रक्षतु। यद्वा पूषेत्यावन्तं स्त्रीलिङ्गं पदम् पूषा पृथिवी त्वां मार्गात् पातु इयं वै पृथिवी पूषेति [ ३, २,, ४, १८ ] श्रुतेः। किमर्थमिन्द्राय इन्द्रप्रीत्यर्थं किम्भूतायेन्द्राय अध्यक्षाय अधि उपरि अक्षिणी यस्य सोऽध्यक्षस्तस्मै। इन्द्रे यज्ञस्वामिने इत्यर्थः॥ १८॥

अनु॑ त्वा मा॒ता म॑न्यता॒मनु॑ पि॒तानु॒ भ्राता॒ सग॑र्भ्यो॒ऽनु॒ सखा॒ सयू॑थ्यः ॥ सा दे॑वि दे॒वमच्छे॒हीन्द्रा॑य॒ सोम॑ᳪ रु॒द्रस्त्वाव॑र्त्तयतु स्व॒स्ति सोम॑सखा पुन॒रेहि॑ ॥ २० ॥

किञ्च। सोमाहरणे प्रवृत्तां त्वां माता त्वदीया जननी अनुमन्यतामनुज्ञां ददातु। पितानुमन्यताम्। उपसर्गात्तुल्या क्रियापदावृत्तिः। सगर्भ्यः समाने गर्भे भवः सोदरो भ्रातानुमन्यताम्। समानस्य छन्दस्यमूर्धप्रभृत्युदर्केष्विति [ ६,३,८४ ] समानपदस्य सादेशः। सयूथ्यः समाने एकस्मिन् यूथे गोसमूहे भवः सयूथ्यः सखा वत्सोऽनुमन्यताम् ॥ हे देवि सोमक्रयणि! सा त्वमिन्द्राय इन्द्रार्थं सोमं देवमच्छेहि प्राप्तुं गच्छ। अच्छाभेराप्तुमिति शाकपूणिः [ निरु० नै० ५, २८ ]। किञ्च रुद्रः त्वा त्वां वर्त्तयतु सोमं गृहीत्वा स्थितां त्वां रुद्रो देवोऽस्मान् प्रति निवर्त्तयतु। यद्वा रुद्रः त्वां प्रवर्त्तयतु। यतो रुद्राज्ञां नातिक्रामन्ति पशवः सोमो देवः सखा यस्याः सा सोमसखा। ईदृशी सोमसहिता सती स्वस्ति क्षेमेण पुनरेहि भूयोऽप्यागच्छ ॥ २० ॥

वस्व्य॒स्यदि॑तिरस्यादि॒त्यासि॑ रु॒द्रासि॑ च॒न्द्रासि॑। बृह॒स्पति॑ष्ट्वा सु॒म्ने र॑म्णातु रु॒द्रो वसु॑भि॒राच॑के ॥ २१ ॥

का० [ ७, ६, ] उदीचीं नीयमानामनुगच्छतो वस्व्यसीतीति। अनुष्टुब्बृहती वा। सोमक्रयण्याः स्तुतिः। सोमक्रयणी गौर्वस्वदित्यादित्यरुद्रचन्द्ररूपेण स्तूयते वस्व्यीत्यादिपञ्चविशेषणैः। हे गौः! त्वं वस्वी वसुरूपासि। अदिति-

देवमातासि । द्वादशादित्यरूपासि । रुद्रा एकादशरुद्ररूपासि । चन्द्ररूपा चासि । किञ्च बृहस्पतिः सुम्ने त्वां रम्णातु रमयतु । रमतेर्व्यत्ययेन श्नाप्रत्ययः । यद्वा रम्णातु संयमयतु । रम्णातिः संयमनकर्मा विसर्जनकर्मा वेति यास्कः [ निरु० दै० १०, ८ ] । रुद्रो वसुभिः अष्टदेवैः सहितः त्वामाचके रक्षितुं कामयताम् । आचक इति चकमान इति कान्तिकर्मसु पठितः [ निघ० २, ६, ११ ] ॥ २१ ॥

अदि॑त्यास्त्वा मू॒र्धन्नाजि॑घर्मि देव॒यज॑ने पृथि॒व्या इडा॑यास्प॒दम॑सि घृ॒तव॒त् स्वाहा॑ । अ॒स्मे र॑मस्व । अ॒स्मे ते॒ बन्धुः॑ । त्वे रायः॑ । मे रायः॑ । मा व॒यꣳ रा॒यस्पोषे॑ण॒ वियौ॑ष्म । तोतो॒ रायः॑ ॥ २२ ॥

का० [ ७, ६, १७—१८ ] षट्पदान्यतीत्य सप्तमं पर्युपविशन्ति हिरण्यमस्मिन्निधायाभिजुहोत्यदित्यास्त्वे तीति । आज्यदेवतं यजुः । आदित्याः अखण्डितायाः पृथिव्याः भुवो मूर्धन् मूर्धनि शिरोरूपे देवयजने देवानां यागयोग्यस्थाने हे आज्य ! त्वा त्वामाजिघर्मि आक्षारयामि । घृ क्षरणदीप्त्योः । पृथिव्या ह्येष मूर्धा यद्देवयजनमिति तित्तिरिश्रुतेर्देवयजनस्य पृथिवीमूर्धत्वम् । किञ्च हे स्थानविशेष ! त्वमिडायाः गोः पदमसि गोपदेनाङ्कितत्वात्तद्रूपमसि तच्च पदं घृतवत् घृतयुक्तं कर्तुं स्वाहा जुहोमि ॥ का० [ ७, ६, १८ ] स्फ्येन पदं त्रिः परिलिखत्यस्मे रमस्वेति । हे गोः पद ! त्वमस्मे अस्मासु रमस्व क्रीडां कुरु ॥ का० [ ७, ६, २० ] समुद्धृत्य पदꣳ स्थाल्यामावपत्यस्मे ते बन्धुरिति । सोमक्रयणीपद !

ते तव अस्मे बन्धुः वयं बन्धुभूताः स्मः । सुपां सुलुगिति [ पा० ७, १, ३९ ] जसः शेआदेशे अस्मे इति रूपम् ॥ का० [ ७, ६, २१ ] यजमानाय पदं प्रयच्छति त्वे राय इति । हे यजमान ! त्वे त्वयि रायो धनानि एतत्पदरूपेण तिष्ठन्त्विति शेषः । यद्वात्र रायः पशवः । पशवो वै राय इति श्रुतेः [ ३, ३, १, ८ ] । त्वयि पशवः सन्तु ॥ का० [ ७, ६, २२ ] मे राय इति यजमानः प्रतिगृह्णातीति । मे मयि यजमाने रायो धनानि पदरूपेण तिष्ठन्तु । पशवो मयि सन्तु । ङेः शेआदेशे मे इति रूपम् । का० [ ७, ६, २३ ] मा वयमित्यध्वर्युरात्मानꣳ संस्पृशतीति । वयमध्वर्युप्रभृतयो रायस्पोषेण धनस्य पुष्ट्या मा वियौष्म वियुक्ता मा भवाम । यौतेर्माङि लुङ्ङिति [ पा० ३, ३, १७५ ] लुङि उत्तमबहुवचने वियौष्मेति रूपम् ॥ का० [ ७, ६, २४—२५ ] हुत्वा पत्न्यै पदं प्रयच्छति नेष्टा तोत इत्येनां वाचयतीति । तोतःशब्दः कलत्रवाची अव्ययम् । तोतः कलत्रे रायो धनानि पशवो वा पदरूपेण तिष्ठन्तु । यद्वाव्ययानामनेकार्थत्वात्तोतःशब्दो युष्मत्पर्यायः । तोतः त्वयि रायः सन्तु ॥ २२ ॥

समख्ये देव्या धिया सन्दक्षिणयोरुचक्षसा । मा म आयुः प्रमोषीर्मो अहं तव । वीरं विदेय तव देवि संदृशि ॥ २३ ॥

का० [ ७, ६, २६ ] सोमक्रयण्या च समीक्षमाणाꣳ समख्य इतीति । एनां वाचयतीत्यनुवर्त्तते । आस्तारपङ्क्तिः पत्न्याशीः । यस्या आद्यावष्टाक्षरौ पादावन्त्यौ द्वादशाक्षरौ सास्तारपङ्क्तिः । अन्त्यौ चेदास्तारपङ्क्तिरिति वचनात् ॥ सोमक्रयणीतः पत्न्याशिषमाशास्ते । हे सोमक्रयणि ! देव्या

द्योतमानया त्वया धिया बुद्ध्या सह बुद्धिपूर्वकमहं समख्ये सहहेि दृष्टेत्यर्थः। ख्या प्रकथने इत्यस्य धातोः संपूर्वस्य लुङि तङि अस्यतिवक्तिख्यातिभ्योऽङिति [पा० ३, १, ५२] च्लेरङि उत्तमैकवचने कर्मणि समख्ये इति रूपम्। एकं संपदं पादपूरणाय। किम्भूतया त्वया दक्षिणया दक्षिणा-त्वयोग्यया। तथा उरुचक्षसा उरु चष्टे सोरुचक्षास्तया विस्तीर्णदर्शनया। एवंविधा त्वं मे मम पत्न्या आयुः मा प्रमोषीः मा खण्डय। मुष स्तेये लुङि रूपम्। मो अहं तव। तव सोमक्रयण्या आयुरहं पत्नी मा उ मेव प्रमोषिषमि-त्यध्याहारः। मार्थे मो इत्यव्ययं वा। अहं तवायुर्न नाश-यामीत्यर्थः। किञ्च वीरं विदेय तव देवि ! संदृशि हे देवि ! गौः तव संदृशि सन्दर्शने सति वीरं पुत्रं विदेय लभेय। सन्दर्शनं संदृक् भावे क्विप्। विदॢ लाभे इत्यस्य व्यत्ययेन तुदा-दिभ्यः श इति [पा० ३, १, ७७] शप्रत्यये लिङि रूपम् २३॥

एष ते गायत्रो भाग इति मे सोमाय ब्रूतादेष ते त्रैष्टुभो भाग इति मे सोमाय ब्रूतादेष ते जागतो भाग इति मे सोमाय ब्रूताच्छन्दोनामानाᳫं साम्राज्यं गच्छेति मे सोमाय ब्रूतात्। आस्माकोऽसि शुक्रस्ते ग्रह्यो विचितस्त्वा विचिन्वन्तु॥ २४॥

का० [७, ७, ८] एष त इति वाचयतीति। मन्त्रपत्तु-त्र्यं यजमानः पठेत्। हे अध्वर्यो ! सोमाय सोमाभिमानिने देवाय मे इति वचो ब्रूयात् त्वं ब्रूहि कथय। इति किम्। हे

सोम! ते तव एष पुरो ह्रियमाणो भागो गायत्रो गायत्री-सम्बन्धी। गायत्रीच्छन्दोऽर्थं तव क्रयो न तु वधार्थमिति यजमानाभिप्रायः। तं ममाभिप्रायं सोमाय कथयेत्यर्थः॥ ते तव एष त्रैष्टुभः त्रिष्टुप्छन्दसः सम्बन्धी भाग इति मेऽभिप्राय-मध्वर्यो! सोमाय त्वं ब्रूहि। एवमग्रेऽपि। जागतो जगती-च्छन्दसः सम्बन्धी। अन्यत् पूर्ववत्। छन्दोनामानाम् छन्द इति नाम येषामन्येषामप्युष्णिगादीनां ताः छन्दोनामानः। तेषां साम्राज्यं गच्छ सर्वेषां छन्दसामाधिपत्यं प्राप्नुहि। इति मे वचः सोमाय ब्रूतात् कथय। यः सोमाय छन्दसामाधिपत्यं दत्त्वा क्रीणाति तं स स्वानामाधिपत्यं प्राप्नोति। तदुक्तं तित्तिरिणा। यो वै सोमं राजानꣳ साम्राज्यलोकं गमयित्वा क्रीणाति गच्छति स्वानाꣳ साम्राज्यमिति। अत एतैर्मन्त्रैः सोमस्य राज्याप्तिः सूचिता। गायत्र्यादिच्छन्दोदेवता यत्र तिष्ठन्ति स छन्दोलोकस्तदाधिपत्यं प्रापय्य सोमं क्रीणानः स्वाधिपत्यभाग्भवतीत्यभिप्रायः॥ का० [७, ७, ८]। प्राक्-पविश्याश्माकोऽसीति सोममालभत इति। हे सोम! त्वं क्रयपथमागतः सन्नास्माकोऽसि। शुक्रः शुक्लसञ्ज्ञः ते तव ग्रहः। ग्रह एव ग्रहः। शुक्रपदमैन्द्रवायवादिग्रहाणामुप-लक्षणम्। शुक्रादयः सर्वे तव ग्रहा इत्यर्थः॥ विचितः। विचिन्वन्तीति विचितः विवेकेन चयनस्य कर्त्तारः त्वां विचि-न्वन्तु विविक्तं कुर्वन्तु सारासारविवेकं कृत्वा सारभूतं समू-हयन्त्वित्यर्थः॥ २४॥

अभि त्यं देवꣳ सवितारमोण्योः कविक्रतुमर्चामि सत्यसवꣳ रत्नधामभि प्रियं मतिं कविम्। ऊर्ध्वा यस्यामतिर्भा अदिद्युतत्सवी-

मनि हिरंण्यपाणिरमिमीत सुक्रतुः कृपा स्वः ॥ प्रजाभ्यस्त्वा । प्रजास्त्वानुप्राणन्तु प्रजास्त्वमनु-प्राणिहि ॥ २५ ॥

का० [ ७, ७, १२—१३ ] सोमोपनहनं द्विगुणं चतु-र्गुणं वा स्तृणाति प्राग्दशमुदग्वा तस्मिन् सोमं मिमीते दश-स्त्वोऽभि त्यमितीति । सावित्र्यष्टिः । त्यं तं सवितारं देव-मभ्यर्चामि सर्वतः पूजयामि । किम्भूतं देवम् । ओण्योः द्यावा-पृथिव्योरन्तरा वर्त्तमानमिति शेषः । ओण्योरिति द्यावापृथिवी-नामसु [ निघ० ३, ३०, १५ ] पठितम् । तथा कविक्रतुं कविः क्रतुः यस्य तं मेधाविकर्माणम् । सत्यसवं सत्यः सवो यस्य अवितथप्रेरणम् । तथा रत्नधाम् रत्नानि दधातीति रत्न-धास्तं रत्नानां धारकं पोषकं दातारं वा । अभिप्रियं सर्वतः प्रीतिविषयम् । मतिं मन्यत इति मतिस्तं मननयोग्यम् । कविं क्रान्तदर्शनम् । किञ्च यस्य सवितुर्भा दीप्तिः अमतिः केनापि मातुमशक्या सती ऊर्ध्वा गगनाभिमुखी सवीमन्य-दिद्युतत् सवः प्रसवः प्रवृत्तिर्नक्षत्रादीनां यस्मिन् स सवीमा तस्मिन् गगनप्रदेशे सर्वाणि वस्तूनि द्योतयन्ते ॥ यद्वायमर्थः । यस्यामतिरात्ममयी भा ऊर्ध्वा गगने सवमदिद्युतत् । अमा-शब्द आत्मवचनः आत्ममयी ततिर्मतिर्वा अमतिः । तन्यत इति ततिः दीप्तिः । मतिरपि प्रकाशरूपत्वाद्दीप्तिः । अमा-ततिशब्दस्य वा अमतिभावः । सवितृभाविशेषणम् । आत्म-प्रकाशमयी ततिर्मतिर्वा यस्य भाः अदिद्युतत् । किंनिमि-त्तम् । सवीमनि अनुज्ञानिमित्तं सर्वान् कर्मोस्वनुज्ञातु-मित्यर्थः । षु प्रसवैश्वर्ययोः [ धा० २२, ४३ ] कुत्सस्त्य

ईमनिजिति ईमनिच्। गुणावादेशौ। सर्वामा प्रसवोऽनुज्ञे त्य-भिधानम्। स स्वरादित्यः। क्लृपा कल्पनं क्लृप् तया क्लृपा कल्पनया समिमीत सोममिति शेषः। एतावान् सोम इति तदीयं परिमाणं निश्चितवानित्यर्थः। किम्भूतः सः हिरण्यपाणिः हिरण्यं पाणौ यस्य सौवर्णाभरणयुक्तहस्तः। सुक्रतुः साधु-सङ्कल्पः॥ का० [ ७, ७, २० ] सन्तान् सङ्गृह्योष्णीषेण बध्नाति प्रजाभ्यस्त्वेतीति। हे सोम! प्रजाभ्यः प्रजानामुपकाराय त्वा त्वां बध्नामीति शेषः॥ का० [ ७, ७, २१ ] अङ्गुल्या मध्ये विवृणोति प्रजास्त्वानुप्राणन्त्वितीति। उष्णीषेण बद्धस्य सोम-देवस्य श्वासरोधो मा भूदिति विवरं कुर्य्यादिति सूत्रार्थः। हे सोम! प्रजास्त्वामनुप्राणन्तु श्वासं कुर्वन्तु त्वामनुसृत्य सर्वाः प्रजाः श्वासं कुर्वन्तु जीवन्तु। तथा हे सोम! प्रजा अनु-श्वासं कुर्वतीः प्रजा अनुसृत्य प्राणिहि श्वासं कुरु। प्रजानां तव च कदाचित् श्वासरोधो मा भूत् परस्परमनुसृत्य जीवनं भवत्वित्यभिप्रायेण विवरकरणमित्यर्थः॥ २५॥

शुक्रं त्वा शुक्रेण क्रीणामि चन्द्रं चन्द्रेणा-मृतममृतेन। सग्मे ते गोः। अस्मे ते चन्द्राणि। तपसस्तनूरसि प्रजापतेर्वर्णः परमेण पशुना क्रीयसे सहस्रपोषं पुषेयम्॥ २६॥

का० [ ७, ८, १६ ] शुक्रं त्वेति हिरण्यमालभ्य वाचयतीति। हे सोम! शुक्रं दीप्यमानं त्वा त्वां शुक्रेण दीप्यमानेन हिरण्येन क्रीणामि क्रीतं करोमि। किम्भूतं त्वां चन्द्रं चदि आह्लादने फलहेतुत्वेनाह्लादकरम्। तथा अमृतं स्वादु-त्वेनामृतसमानम्। किम्भूतेन शुक्रेण चन्द्रेणाह्लादकरेण

तथामृतेनाग्निसंयोगादिनापि विनाशरहितेन ॥ का० [ ७, ८, १७ ] मग्मे त इति सोमविक्रयिणं हिरण्येनाभिकम्पयतीति । यो हिरण्यमादाय सोमं विक्रीणीते तं हिरण्येनाभिकम्पयेत् । तद्धस्ते हिरण्यं दत्त्वा दत्त्वा स्वीकुर्वंस्तं निराशं कुर्यादिति सूत्रार्थः ॥ षष्ठी प्रथमार्थे ; हे सोमविक्रयिन् ! गोः गौः सोममूल्यत्वेन तुभ्यं दत्ता सा त्वदीया गौः पुनः प्रत्यावृत्य मग्मे यजमाने तिष्ठतु । हिरण्यमेव तवास्तु गौर्मा भूदित्यर्थः ॥ यद्वा ते गौः मग्मे वर्त्तते । गौर्ग्मा च्मा क्ष्मेत्युक्तेः [ नि० १, १, २ ] ग्मा गौः तया सह वर्त्तमानः सग्मस्तस्मिन् मग्मे ते गोरिति । यजमाने ते गौरिति श्रुतेः [ ३, ३, ३, ७ ] सग्मो यजमानः ॥ का० [ ७, ८, १८ ] । अस्मे त इति यजमानसहितं निदधातीति । यजमाने प्रत्यर्पितं यद्द्रव्यं तत्पुनर्यजमानसहितं सोमविक्रयिणः पुरतो निदध्यादिति सूत्रार्थः । हे सोमविक्रयिन् ! ते चन्द्राणि तुभ्यं दत्तानि यानि हिरण्यानि तान्यस्मे अस्मासु प्रत्यावृत्य तिष्ठन्तु तव गौरेव सोममूल्यमस्तु हिरण्यानि मा भुवन्नित्यर्थः ॥ का० [ ७, ८, २० ] अजां प्रत्यञ्चुखीमालभ्य वाचयति तपसस्तनूरितीति । अर्धे अजा देवतास्य यजुषोऽर्धे सोमः । हे अजे ! त्वं तपसः पुण्यस्य तनूरसि देहोऽसि । दिवि स्थितस्य यज्ञियस्यानयनायाजां गृहीत्वा गायत्री जगामेति तित्तिरिणा सोमाहरणोपाख्याने उक्तत्वादजायाः पुण्यशरीरत्वम् । किञ्च हे अजे ! त्वं प्रजापतेर्वर्णोऽसि वर्णो देहः । यथा प्रजापतिः सर्वदेवताप्रिय एवमजापि । तदुक्तं तित्तिरिणा । सा वा एषा सर्वदेवत्या यदजेति । एवमजामुक्त्वा सोमं प्रत्याह । हे सोम ! परमेण पशुना उत्तमेनाजालक्षणेनानेन पशुना त्वं क्रीयसे । तपसस्तनूत्वादजाया उत्तमत्वम् । अतस्तव प्रसा-

दात्सहस्रपोषं पुत्रपश्वादिसहस्राणां पोषो यथा भवति तथा पुषेयं पुष्टो भूयासम् ॥ यद्वायमर्थः। हे अजे! त्वं प्रजापतेस्तपसस्तनूरसि प्रजापतितपोरूपासि तत उत्पन्नत्वात्। तदुक्तं श्रुत्या [ ३, ३, ३, ८ ]। तपसो ह वा एषा प्रजापतेः सम्भूता यदजेति। किञ्च प्रजापतेर्वर्णो रूपं त्वमसि। त्रिगुणत्वात् प्रजापतेस्त्रिरूपत्वम्। अजापि प्रतिसंवत्सरं त्रिवारं प्रसूते तस्मात् प्रजापतेर्वर्णत्वम्। तदुक्तं श्रुत्या [ ३, ३, ३, ८ ]। सा यत्त्रिः संवत्सरस्य जायते तेन प्रजापतेर्वर्ण इति। एवमजां स्तुत्वा सोममाह। परमेष्ठोत्कृष्टेन पशुनाजया त्वं क्रीयसे ततोऽहं सहस्रपोषं सहस्रं प्राणिनां पुष्णातीति सहस्रपोषं धनं पुषेयं पुष्णीयां वर्धयेयमित्यर्थः। पुष्णातेर्व्यत्ययेन श्ने प्रत्यये लिङि पुषेयमिति रूपम् ॥ २६ ॥

मित्रो न एहि सुमित्रधः। इन्द्रस्योरुमाविश दक्षिणमुशन्नुशन्तᳪ स्योनः स्योनम्। स्वान भ्राजाङ्घारे बम्भारे हस्त सुहस्त कृशानो। एते वः सोमक्रयणास्तान्रक्षध्वं मा वो दभन् ॥ २७ ॥

का० [ ७, ८, २१ ] सव्येनाजां प्रयच्छन्मित्रो न इति दक्षिणेन सोममादायेति ॥ सौम्यम्। हे सोम! त्वं नोऽस्मान् प्रत्येहि आगच्छ। किम्भूतस्त्वं मित्रः सखा प्रीतियुतः यद्वा मित्रः रविरूपः। तथा सुमित्रधः शोभनानि मित्राणि दधाति पुष्यति सुमित्रधः। क्रीत्वा वाससा बद्धस्य सोमस्य वरुणदेवताकत्वेन क्रूरत्वात्तच्छान्त्यर्थो मित्रत्वेन प्रार्थ्यते।

तदाह तित्तिरिः। वारुणो वै क्रीतः सोम उपनद्धो मित्रो न एहि सुमित्रध इत्याह शान्त्यै इति॥ का० [७, ८, २३] दीक्षितोरौ दक्षिणे प्रत्यह्य वासो निदधातीन्द्रस्योरुमितीति। वासः प्रत्यह्य वस्त्रमुपरिस्थाप्य सोमं निदध्यादित्यर्थः॥ यजमानरूपेण परमैश्वर्येणोपेतत्वादत्रेन्द्रशब्देन यजमानः। तथा च श्रुतिः [३, ३, ३, १०]। एष वा अत्रेन्द्रो भवति यद्यजमान इति। हे सोम! त्वमिन्द्रस्य यजमानस्य दक्षिणमूरुमाविश दक्षिणे ऊरावुपविशेत्यर्थः। किम्भूतस्त्वमुशन् वश कान्तौ वष्टि उशन् शतृप्रत्ययः ऊरुं कामयमानः। तथा स्योनः सुखभूतः। किम्भूतमूरुमुशन्तं सोमं कामयमानं स्योनमुपवेशे सुखकरम्। पुरा देवाः सोमं क्रीतमिन्द्रस्योरावुपवेशयन् तस्मादत्रेन्द्रशब्देन यजमानः। तदाह तित्तिरिः देवा वै सोममक्रीणंस्तमिन्द्रस्योरौ दक्षिण आसादयन् स खलु वा एतर्ह्यन्द्रो यो यजते तस्मादेवमाहेति। का० [७, ८, २४] स्वान भ्राजेति जपति सोमविक्रयिणमीक्षमाण इति। स्वनति स्वानः। भ्राजते शोभतेऽसौ भ्राजः। अङ्घस्य पापस्यारिरङ्घारिः। बिभर्त्ति पुष्णाति विश्वमिति बम्भारिः। हसति हस्तः सर्वदा हृष्टरूपः। शोभनौ हस्तौ यस्य सुहस्तः। कृशं दुर्बलमनिति जीवयतीति कृशानुः। स्वानादयः सप्त सोमरक्षका देवविशेषाः। हे स्वानादयः सप्त देवाः! वो युष्माकमेते सोमक्रयणाः सोमः क्रीयते यैस्ते सोमं क्रेतुमानीता हिरण्यादिपदार्थाः पुरतः स्थापिताः। तान् पदार्थान् यूयं रक्षध्वमवत। वो युष्मान्मा दभन् वैरिणो मा हिंसिषत। स्वानादयो धिष्ण्याधिष्ठातारः सोमरक्षकाः। तदाह तित्तिरिः। स्वान भ्राजेत्याह ते वामुष्मिंल्लोके सोममरक्षन्निति॥ २७॥

र्गर्त्तमीदात्तस्मान्माद्वस्तिद्र इत्येति सूत्रार्थः॥ तत्रावनयनमन्त्रः अवनयामि सिञ्चयामि अन्यत् पूर्ववत्। अथावस्तरणमन्त्रः अवस्तृणामि दर्भैराच्छादयामि अन्यत् पूर्ववत्॥ का० [ ८, ५, २५ ] तनूपरि कुशान् कृत्वाधिषवणे फलके द्व्यङ्गुलान्तरे प्रक्षालिते प्राची अरत्निमात्रे सन्तृणे वोपदधाति पर्यूहति च रक्षोहणौ रक्षोहणाविति। ययोः फलकयोरुपरि सोमोऽभिषूयते ते द्वे अधिषवणफलके तयोरुभयोर्मध्ये द्व्यङ्गुलव्यवहिते अरत्निप्रमाणे संहते ईषद्छ्वनोपेते चतुर्णां गर्त्तानामुपरि स्थापयेत् तयोः परितो मृदा छिद्रपिधानं कुर्य्यादित्यर्थः॥ तत्रोपधानमन्त्रः यावधिषवणफलकविशेषौ रक्षोहणौ रक्षसां नाशकौ वलगहनौ कृत्याविनाशकौ वैष्णवौ वैष्णवौ विष्णुदेवताकौ लिङ्गव्यत्ययः तौ वां युवामहमुपदधामि द्वयोर्गर्त्तयोरुपरि एकैकं फलकं स्थापयामि॥ अथ पर्यूहणमन्त्रः पर्यूहामि मृदा परितश्छादयामि अन्यत् पूर्ववत्॥ का० [ ८, ५, २६ ] तयोश्चर्माधिषवणं परिकृत्त१ सर्वरोहितं निदधाति वैष्णवमसीति। यस्मिंश्चर्मणि सोमोऽभिषूयते तच्चर्माधिषवणाख्यम् अग्रभागे छिन्नं सर्वमपि लोहितवर्णं तयोः फलकयोरुपरि स्थापयेदिति सूत्रार्थः। हे चर्म! त्वं वैष्णवमसि यज्ञरक्षकविष्णुसम्बन्धि भवसि॥ का० [ ८, ५, २७ ] तस्मिन् ग्रावणः पञ्च वैष्णवा स्थेति। निदधातीत्यनुवर्त्तते तस्मिंश्चर्मणि सोमाभिषवहेतून् पञ्च पाषाणान् स्थापयेदिति सूत्रार्थः॥ हे ग्रावाणः! यूयं वैष्णवा स्थ यज्ञरक्षकविष्णुसम्बन्धिनो भवथ॥ २५॥

दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒वे॒ऽश्विनो॑र्बा॒हुभ्यां॑ पू॒ष्णो हस्ता॑भ्याम्। आद॑दे॒ नार्य्य॑सि इ॒दम॒-

इदमहꣳ रक्ष॑सां ग्रीवा॑ अपि॑कृन्तामि। यवो॑ऽसि यवयास्मद्द्वेषो॑ यवयारा॑तीः। दिवे त्वान्तरि॑क्षाय त्वा पृथिव्यै त्वा॑ शुन्ध॑न्तां लोकाः पि॑तृषद॑नाः। पितृषद॑नमसि ॥ २६ ॥

इत उत्तरमौदुम्बरीमन्त्राः ॥ का० [ ८, ५, ३०—३२ ] औदुम्बरीं मिनोति यजमानमात्रीं यूपवच्छेदनाद्यग्रादि करोत्यावस्तरणादिति। उदुम्बरवृक्षादुत्पन्नां काञ्चिच्छाखां यजमानदेहमितां सदोमण्डपमध्ये निखनेत् सा च शाखा निखननात् पूर्वं यूपवद्भूमौ शयित्वा वर्त्तते यूपावटखननवदभ्रिस्वीकारमारभ्य दर्भास्तरणपर्यन्तान् पदार्थान्मन्त्रैरेव कुर्यादिति सूत्रार्थः॥ यूपावटप्रदेशे का० [ ६, २, ८ ] देवस्य त्वेत्यभ्रिमादायेति। व्याख्यातं यजुः॥ का० [ ६, २, ८ ] यूपावटं परिलिखतीदमहमिति। एतदपि व्याख्यातम्। का० [ ६, २, १५ ] यवोऽसीत्यप्स्, यवानोप्य ेति। यवदैवत्यं हे धान्यविशेष! त्वं यवोऽसि यौति पृथक्करोतीति यवः यस्मात् द्वेषो द्वेष्टॄन् शत्रून् द्वेषो दौर्भाग्यं वा अस्मत् अस्मत्तो यवय पृथक् कुरु तथा अरातीः अदानानि च यवय पृथक् कुरु। अनेन सौभाग्यं धनं च प्रार्थ्यत इति भावः॥ का० [ ६, २, १५—१६ ] प्रोक्षत्यग्रमध्यमूलानि दिवे त्वेति प्रतिमन्त्रं प्रोक्षामीति सर्वत्र साकाङ्क्षत्वादिति॥ तत्र प्रथमो मन्त्रः हे औदुम्बर्यग्रभाग! दिवे द्युलोकप्रीत्यर्थं त्वा त्वां प्रोक्षामीति शेषः॥ द्वितीयः हे मध्यभाग! अन्तरिक्षायान्तरिक्षलोकप्रीत्यै त्वां प्रोक्षामि॥ अथ तृतीयः हे मूलभाग! पृथिव्यै पृथिवीप्रीत्यै त्वां प्रोक्षामि॥ का० [ ६, २, १७ ] अवटे शेषमासिञ्चति शुन्धन्तामिति॥ हे यजुषी पितॄत्र पितरः सीदन्ति येषु लोकेषु ते पितृषदनाः

लोका: शुन्धन्तामनेनोदकसेचनेन शुद्धा भवन्तु। खननेनोत्पन्नस्य क्रौर्यस्य शान्त्यर्थमिदमुदकसेचनम्। तदाह तित्तिरिः। क्रूरमिव वा एतत्करोति यत् खनति यत्पयोऽवनयति शान्त्यै तदिति॥ का० [६, २, १८] बर्हिःषि प्रास्यत्युदक्चि च प्रास्यति पितृषदनमसीति। तस्मिन्नवटे प्रागग्रानुदगग्रांश्च दर्भानास्तृणातीति सूत्रार्थ:॥ पितर: सीदन्त्युपविशन्ति यस्मिन् तत् पितृषदनम्। हे बर्हि:! त्वं पितृषदनमसि॥ २६॥

उद्दिवꣳ स्तभानान्तरिक्षं पृण दृꣳहस्व पृथिव्याम्। द्युतानस्त्वा मारुतो मिनोतु मित्रावरुणौ ध्रुवेण धर्मणा। ब्रह्मवनि त्वा क्षत्रवनि रायस्पोषवनि पर्यूहामि। ब्रह्म दृꣳह क्षत्रं दृꣳहायुर्दृꣳह प्रजां दृꣳह॥ २७॥

का० [८, ५, ३३] उद्दिवमित्युच्छ्रयतीति। उच्छ्रयणमूर्ध्वाग्रत्वेन स्थापनम्॥ पञ्च यजूंष्यौदुम्बरीदेवत्यानि॥ हे औदुम्बरि! त्वं दिवं द्युलोकमुत्तभान स्तम्भय ऊर्ध्व: सन् यथा न पतति तथा कुर्वित्यर्थ:। अन्तरिक्षं पृण पूरय। पृथिव्यां दृंहस्व दृढा भव यद्वा पृथिव्यामिति सप्तमी द्वितीयार्थे पृथिवीं दृढीकुरु॥ का० [८, ५, ३४] द्युतान इति मिनोतीति। शाखां गर्त्ते प्रक्षिपतीति सूत्रार्थ:॥ हे औदुम्बरि! द्युतान: दीप्यमानो मारुतो वायु: ध्रुवेण स्थिरेण धर्मणा धारणेन त्वां मिनोतु गर्त्ते प्रक्षिपतु डुमिञ् प्रक्षेपे स्वादि:। तथा मित्रावरुणौ देवौ ध्रुवेण धर्मणा त्वां प्रक्षिपतामिति शेष:॥ का० ८ ५. ३ ५ ] पर्यूहत्याद्योपसेचनात् कृत्वेति। पर्यूहणमारभ्योपसेचनपर्यन्तं यथा यूपे कृतं तथात्रापि कुर्यादित्यर्थ:

तत्र यूपस्थाने का० [ ६, २, १० ] ब्रह्मवनि त्वेति पांसुभिः पर्यूहतीति॥ हे औदुम्बरि! त्वा त्वां पर्यूहामि परितो मृत्तिकां क्षिपामि किम्भूतां त्वां ब्रह्मवनि ब्रह्म ब्राह्मणजातिं वनति सम्भजत इति ब्रह्मवनिः क्षत्रं क्षत्रियजातिं वनतीति क्षत्रवनिः रायो धनस्य पोषं पुष्टिं वनतीति रायस्पोषवनिः सर्वत्र सुपां सुलुगिति [ पा० ७, १, ३९ ] विभक्तेर्लुक्॥ का० [ ६, २, ११ ] ब्रह्म दृंहेति मैत्रावरुणदण्डेन समन्तं त्रिः पर्यूषतीति। परितो दृढीकुर्य्यादिति सूत्रार्थः॥ हे औदुम्बरि! ब्रह्म ब्राह्मणजातिं क्षत्रं क्षत्रियजातिमायुः जीवनं प्रजां पुत्रादिरूपाञ्च दृंह दृढीकुरु॥ २७॥

ध्रुवासि ध्रुवोऽयं यजमानोऽस्मिन्नायतने प्रजया पशुभिर्भूयात्। घृतेन द्यावापृथिवी पूर्येथाम्। इन्द्रस्य छदिरसि विश्वजनस्य छाया॥ २८॥

का० [ ८, ५, ३५ ] ध्रुवासीति वाचयत्यौदुम्बरीमालभ्येति। आलभनं स्पर्शनम्॥ हे औदुम्बरि! त्वं ध्रुवासि स्थिरा भवसि त्वमिवायं यजमानोऽस्मिन्नायतने स्वकीये गृहे ध्रुवो भूयात् प्रजया पुत्रादिकया पशुभिः गवादिभिस्सह स्थिरोऽस्तु॥ का० [ ८, ५, ३७ ] स्रुवेण विशाखे जुहोति घृतेनेति। औदुम्बर्य्या विशाखे यस्मिन् प्रदेशे द्विधा शाखोत्पत्तिस्तत्र जुहुयादिति सूत्रार्थः॥ इयमाभिनानेन घृतेन द्यावापृथिवी द्यावापृथिव्यौ पूर्येथां पूरिते भवताम्॥ का० [ ८, ६, १० ] इन्द्रस्य छदिरिति मध्यमं छदिरारोप्यति। औदुम्बरीमितस्ततः ऊर्ध्वं सदोनामकं मण्डपं निर्माय तस्योपरि

प्रावरणाय मध्यं कटमारोपयेदिति सूत्रार्थः॥ छदिःशब्देन तृणनिर्मितः कट उच्यते। हे तृणमय कट! त्वमिन्द्रस्य छदिरसि इन्द्रसम्बन्धी कटो भवसि अतस्त्वं विश्वजनस्य छाया भवेति शेषः। सदोमध्यवर्त्तिनः सर्वजनस्य यजमानर्त्विग्रूपस्य प्राणिनः प्रावरणाय छाया भवेत्यर्थः। सदस इन्द्रदेवताकत्वेन तदीयच्छदिष इन्द्रसम्बन्धित्वम्॥ २८॥

परि त्वा गिर्वणो गिर इमा भवन्तु विश्वतः। वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टय॥ २९॥

का० [८, ६, १२] परि त्वेति परिवार्येति। परितः कुर्यात्सदावरणं कृत्वेति सूत्रार्थः॥ ऐन्द्र्यनुष्टुबनिरुक्ता मधुच्छन्दोदृष्टा। गीर्भिः स्तुतिभिर्वननीयो भजनीयो गिर्वणा इन्द्रः सदोऽभिमानी। हे गिर्वण इन्द्र! स्तोत्रशस्त्ररूपा गिरः त्वा त्वां विश्वतः सर्वतः कटरूपेण परिभवन्तु परिगृह्णन्तु। किम्भूतं त्वां वृद्धायुं वृद्धा आयवो मनुष्या यजमानादयो मरुतो वा यस्य तं यद्वा वृद्धः श्रेष्ठश्चासावायुश्च तं महामनुष्यम्। किम्भूताः गिरः अनुवृद्धयः अनु सवनक्रमेण वृद्धिर्यासां ताः शनैः प्रातःसवनं तत उच्चैर्माध्यन्दिनं सवनं तानस्वरेण तृतीयं सवनमिति क्रमः। किञ्च जुष्टयोऽस्मत्सेवास्तव जुष्टाः प्रियाः भवन्तु जुषी प्रीतिसेवनयोः जोषणं जुष्टिः।

इन्द्रस्य स्यूरसि। इन्द्रस्य ध्रुवोऽसि। ऐन्द्रमसि। वैश्वदेवमसि॥ ३०॥

का० [८, ६, १२] परिषीवणग्रन्थ्यभिमर्शनान्यैन्द्रेरिति। इन्द्रदेवताकैस्त्रिभिर्मन्त्रैः परिषीवणादित्रयं कुर्या-

दिति सूत्रार्थः॥ तत्र प्रथमः हे रज्जो! त्वमिन्द्रस्य सदोऽभिमानिदेवस्य सम्बन्धिनो स्यूः सीवनमसि सीव्यतेऽनया सा स्यूः क्विप् च्छ्वोः शूडनुनासिके चेति [ पा० ६, ४, १९ ] ऊडादेशः॥ द्वितीयः हे ग्रन्थे! त्वमिन्द्रसम्बन्धी भूत्वा ध्रुवः स्थिरो भवसि॥ अथ तृतीयः हे सदः! त्वमिन्द्रसम्बन्धि भवसि॥ का० [ ८, ६, १३—१४ ] हविर्धानापरान्तमुत्तरेणाग्नीध्रमग्न्यागारद्वारमन्तर्वेद्यर्थं भूयः सर्वं वा निष्ठाप्य वैश्वदेवमसीत्यालभत इति। हविर्धानमण्डपस्यापरान्तो वायव्यकोणस्तस्योत्तरभागे किञ्चिदाग्नीध्रनामकमग्निस्थानं कृत्वा तस्य स्पर्शं कुर्य्यादिति सूत्रार्थः॥ हे आग्नीध्र! त्वं सर्वदेवसम्बन्धि भवसि॥ ३०॥

विभूर॑सि प्र॒वाह॑णः। वह्नि॑रसि हव्य॒वा॑ह॑नः। श्वा॒त्रो॑ऽसि॒ प्रचे॑ताः। तु॒थो॑ऽसि वि॒श्ववे॑दाः॥ ३१॥

इत उत्तरं षोडश धिष्ण्यमन्त्राः॥ तदाह का० [ ८, ६, १५ ] धिष्ण्यान्निवपत्युद्धतावोक्षिते पुरीषं निवपति स्फ्येनान्वारब्ध उदङ् उपविश्य विभूरसीति प्रतिमन्त्रमिति। अग्नीनामाश्रयभूता मृदा निर्मिताः स्वल्पवेदिका धिष्ण्यान्युच्यन्ते॥ का० [ ८, ६, १६ ] आग्नीध्रीयं पूर्वमिति॥ विभूशब्दप्रवाहणशब्दावाग्नीध्रीयधिष्ण्यस्य नामनी। ते वै द्विनामानो भवन्तीति श्रुतेः [ ३, ६, २, २४ ] अष्टयजुषां धिष्ण्या अग्नयो देवताः। हे आग्नीध्रीय धिष्ण्य! त्वं विभूः प्रवाहणश्चासि विविधं भवतीति विभूः एतस्मादेव धिष्ण्यादितरधिष्ण्येष्वग्निविहरणादेतस्य विभूत्वम् प्रवाहयतीति

प्रवाहण: तस्य हि दक्षिणोत्तरत ऋत्विजो गच्छन्ति हविष: प्रवाहयितृत्वाद्वा प्रवाहणत्वम् । धिष्ण्यगतानग्नीन् प्रत्यन्ते देवा ऊचु: प्रत्येकं स्वं नामधेयं सम्पादयतेति । तदाह तित्तिरि: । तान् देवा अब्रुवन् द्वे द्वे नामनी कुरुतेति ॥ मैत्रावरुणहोतृब्राह्मणाच्छंसिपोतृनेष्ट्रच्छावाकानां धिष्ण्यान् सदसि कुर्य्यात् । तदाह का० [ ८, ६, १८—२१ ] षट् सदसि प्रत्यङ्मुखो द्वारमपरेण होतुर्दक्षिणपूर्वेणौदुम्बरीं मैत्रावरुणस्य होतृधिष्ण्यमुत्तरेण चतुर: समान्तरान् ब्राह्मणाच्छंसिपोतृनेष्ट्रच्छावाकानामिति ॥ होतुर्धिष्ण्यं हे होतृधिष्ण्य ! वह्निर्हव्यवाहनश्चासि वहति यज्ञकर्म निर्वहतीति वह्नि: हव्यं वहति देवान् प्रति प्रापयतीति हव्यवाहन: । यथाग्नीध्रीयधिष्ण्यस्य नामद्वयमुक्तं तथा होत्रादिधिष्ण्यानामपि बोध्यम् ॥ मैत्रावरुणधिष्ण्यं हे मैत्रावरुणधिष्ण्य ! त्वं श्वात्र: प्रचेताश्चासि श्वु क्षिप्रमततीति श्वात्रो मित्र: प्रकृष्टं चेतो ज्ञानं यस्य स प्रचेता: वरुण: तद्रूपोऽसि ॥ ब्राह्मणाच्छंसिन: हे ब्राह्मणाच्छंसिधिष्ण्य ! त्वं तुथो विश्ववेदाश्चासि । ब्रह्म वै तुथ इति श्रुते: [ ४, ३, ४, १५ ] ब्रह्मरूपोऽसि । विश्वं वेत्ति विश्ववेदा: सर्वज्ञ: । यद्वा तुथशब्देन देवान् प्रति दक्षिणानां विभागकर्त्ता पुरुष उच्यते । तदाह तित्तिर: । तुथो ह स्म वै विश्ववेदा देवानां दक्षिणा विभजतीति ॥ ३१ ॥

उशिगसि कविः । अङ्घारिरसि बम्भारिः । अवस्यूरसि दुवस्वान् । शुन्ध्यूरसि मार्जालीयः । सम्राडसि कृशानुः । परिषद्योऽसि पवमानः ।

नभो॑ऽसि प्रत॒क्वा॑। मृ॒ष्टो॑ऽसि हव्य॒सूद॑नः ऋ॒त॒धा॑मासि॒ स्व॑र्ज्योतिः॥ ३२॥

पोतुः। हे पोतृधिष्ण्य! त्वमुशिक् कामनीयः कविः विद्वांश्चासि॥ नेष्टुः। अङ्घस्यांहसः पापस्यारिरङ्घारिः बिभर्तीति बम्भारिः त्वं तद्रूपोऽसि हे नेष्टुधिष्ण्य!। दिवि सोमरक्षकौ द्वावङ्घारिबम्भारौ तथा च सोमरक्षकमन्त्रे स्वानभ्राजाङ्घारे बम्भार इत्याम्नातम् [४ अध्या० २७ क०]॥ अच्छावाकस्य। हे अच्छावाकधिष्ण्य! त्वमवस्यूः दुवस्वान् चासि अवोऽन्नमिच्छतीत्यवस्यूः। सुप आत्मनः क्यच् [पा० ३, १, ८] क्याच्छन्दसीति [पा० ३, २, १७०] क्यजन्तादुप्रत्ययः दीर्घश्छान्दसः औणादिक ऊप्रत्ययो वा। दुवोऽस्यास्तीति दुवस्वान् हविष्मान् दुव इति हविर्नाम अच्छावाको हि पुरोडाशभागं लभते॥ एवं होत्रादिधिष्ण्यान् सदसि निर्माय वेदेर्दक्षिणभागे मार्जालीयं निर्माति। तदाह का० [८, ६, २२] आग्नीध्राद्दक्षिणꣳ सम्प्रति वेद्यन्ते दक्षिणामुखो मार्जालीयमिति। शुन्धयतीति शुन्ध्यूः मार्ष्टीति मार्जालीयः तत्र हि पात्राणि प्रक्षाल्यन्ते॥ का० [८, ६, २३] सदोद्वारं पूर्वेण तिष्ठन्ननुदिशत्याहवनीयबहिष्पवमानदेशचात्वालशामित्रौदुम्बरीब्रह्मासनशालाद्वार्यप्राजहितान् सम्राडसीति प्रतिमन्त्रमिति। सदोद्वारस्य पूर्वभागेऽवस्थाया हवनीयादीन् सम्राडसीत्याद्यष्टमन्त्रैः क्रमेण निर्दिशेदिति सूत्रार्थः॥ तत्रादावाहवनीयम् हे उत्तरवेदिगताहवनीय! त्वं सम्राट् कृशानुश्चासि बहुविधाहुत्याधारत्वेन सम्यग्राजत इति सम्राट् पयोव्रतादिभिः कृशं क्षीणं यजमानमनु गच्छतीति कृशानुः॥ बहिष्पवमानदेशम् हे बहिष्पवमानदेश! त्वं परिषद्यः पवमानश्चासि

समेता ऋत्विजः परिषत् तद्योग्यः परिषद्यः अत एव शुद्धत्वात्पवमानः ॥ चात्वालम् हे चात्वाल ! त्वं नभोऽसि खनने छिद्ररूपत्वादाकाशः न भातीति वा । तथा प्रतक्वा प्रदक्षिणं तकन्ति गच्छन्ति ऋत्विजो यत्र स प्रतक्वा । तक निर्गत्यर्थः अन्येभ्योऽपि दृश्यन्त इति [ पा० ३, २, ७५ ] वनिप् ॥ शामित्रम् पशुविशसनप्रदेशः शामित्रशब्देनोच्यते हे शामित्र ! त्वं मृष्टोऽसि पशुविशसनस्य विहितत्वेनाशुद्धिहेतुत्वाभावात्सत्यपि विशसने शुद्धोऽसि यद्वा मृष्टः मृतत्वाच्छिष्टः पक्वं हविर्मृष्टं भवति । तथा हव्यस्य हृदयजिह्वादिरूपस्य हविषः सूदनः पाकहेतुश्चासि ॥ औदुम्बरीम् हे औदुम्बरि ! त्वमृतधामा ऋतं सामगानं धामोपवेशनस्थानं यस्याः सा । औदुम्बरीं स्पृष्ट्वोद्गायतीत्युक्तेः । स्वर्ज्योतिः उन्नतत्वेन स्वर्गं प्रकाशकः यद्वा सूर्यज्योतिः ॥ ३२ ॥

स॒मु॒द्रो᳖ऽसि वि॒श्वव्य॑चाः । अ॒जो᳖ऽस्येक॑पात् । अहि॑रसि बु॒ध्न्यः᳖ । वाग॑स्यैन्द्रम॑सि॒ सदो॑ऽसि । ऋत॑स्य द्वारौ॒ मा मा॒ सन्ता॑प्तम् । अध्व॑नामध्व पते॒ प्र मा॑ तिर स्व॒स्ति मे॒ऽस्मिन् प॒थि दे॑व॒याने॑ भूयात् ॥ ३३ ॥

ब्रह्मासनम् हे ब्रह्मासन ! त्वं समुद्रः विश्वव्यचाश्चासि सर्वे देवाः सम्यगुत्कर्षेण द्रवन्त्यत्रेति समुद्रः समुद्र इवागाढो ज्ञानेन ब्रह्मा यत्र तिष्ठतीति वा । विश्वं सर्वं यज्ञं व्यचति गच्छति कृताकृतप्रत्यवेक्षणायेति विश्वव्यचाः ॥ शालाद्वार्यम् हे प्राचीनवंशशालाद्वारवर्तिन्नग्ने ! त्वमजोऽसि अजति प्राङ्वमीयरूपेण यज्ञदेशे गच्छतीत्यजः यद्वा परब्रह्मत्वमुपचर्यते

न जायत इत्यजः। एकः पातीत्येकपात् यद्वा एकः पा . सर्वाणि भूतानि यस्येत्येकपात् पादोऽस्य विश्वा भूतानीति श्रुतेः॥ प्राजहितम् पत्नीशालापश्चिमभागवर्ती पुरातनो गार्हपत्योऽग्निः प्राजहित उच्यते हे प्राजहित! त्वमहिरसि न हीयत इत्यहि शालाद्वारीये नूतने गार्हपत्ये उत्पन्नेऽपि अयमग्निः स्वरूपेण न हीयते। बुध्नो मूलं तत्र भवो बुध्न्यः आधानकाले प्रथममाहितत्वान्मूलभावित्वम् स हि प्रथमं मथ्यते॥ नामभिरेवात्र धिष्ण्यानां स्तुतिः। उक्तं च। स्तुतिः स्वनाम्ना कर्मणा वाथ रूपैरिति॥ का० [ ८, ८, २२ [ वागसीति सदोऽभिमर्शनमिति॥ हे सदः! त्वं वागसि वाचास्मिन् कर्म कुर्वन्तीति वाक्शब्देनाभेदोपचारेण सद उच्यते। ऐन्द्रमिन्द्रदेवताकं चासि। सीदन्त्यस्मिन् इति सदः॥ का० [ ८, ८, २३ ] ऋतस्य द्वाराविति द्वार्ये इति। द्वार्ये सदोद्वारशाखे अभिमृशतीति सूत्रार्थः॥ हे ऋतस्य यज्ञस्य द्वारौ द्वारदेशस्थायिन्यौ शाखे! युवां मा मां मा सन्ताप्तं मा सन्तापयतं प्रवेशनिःक्रमणे स्खलनादिना। तपतेर्लुङि मध्यमैकवचने झलो झलीति [ पा० ८, २, २६ ] सिज्लोपे रूपम्॥ का० [५, ८, २४—२५] अभिमन्त्रणमुत्तरैरध्वनामध्वपत इति सूर्य्यम्। उत्तरैस्त्रिभिर्मन्त्रैस्त्रयाणामभिमन्त्रणं दर्शनमित्यर्थः तत्राध्वनामिति सूर्यमभिमन्त्रयत इति सूत्रार्थः॥ अध्वपते मार्गपालक रवे! अध्वनां मार्गाणां मध्ये वर्त्तमानं मा मां त्वं प्रतिर प्रवर्धय तिरतिर्वृद्ध्यर्थः। किञ्च अस्मिन् देवयाने देवयानप्रापके पथि यज्ञमार्गे मे मम स्वस्ति कल्याणं भूयात्॥ ३३॥

मित्रस्य मा चक्षुषेक्षध्वम्। अग्नयः सगराः

सगरा स्थ सगरेण नाम्ना रौद्रेणानीकेन पात माग्नयः पिपृत माग्नयो गोपायत मा नमो वोऽस्तु मा मा हिꣳसिष्ट ॥ ३४ ॥

का० [ ९, ८, २६ ] मित्रस्येत्यृत्विज इति। अभिमन्त्रयत इति शेषः॥ हे ऋत्विजः! मित्रस्यादित्यस्य चक्षुषा नेत्रेण मा मामीक्षध्वं पश्यत सख्युर्नेत्रेण वा सखा यथा सखायं हितचक्षुषा पश्यति तथा मां पश्यध्वमित्यर्थः॥ का० [ ९, ८, २७ ] अग्नयः सगरा इति धिष्ण्यानिति। अभिमन्त्रयत इति शेषः॥ हे अग्नयः सगराः! गृ स्तुतौ गरेण स्तुत्या सहिताः सगराः यूयं सगरेण नाम्ना स्तुतिसहितेन नाम्ना धिष्ण्या इति नाम्ना व्यवह्रियमाणत्वात्सगराः स्थ समानस्तुतयो भवथ समानो गरो येषां ते सगराः। हे अग्नयः! ते यूयं रौद्रेणानीकेन शत्रुविनाशकत्वादुग्रेण भवदीयेन सैन्येन मा मां पात रक्षत यद्वा रुद्रदेवत्येन मुखेन मां पात अनीकं मुखं सैन्यञ्च। हे अग्नयः! मा मां पिपृत धनादिभिः पूरयत। मा मां गोपायत रक्षत। अभ्यासे भूयांसमर्थं मन्यन्त इति यास्कोक्तेः [ निरु० १०, ४२ ] निरन्तरं रक्षेत्यर्थः। वा युष्मभ्यं नमोऽस्तु मा मां मा हिंसिष्ट मा वधिष्ट निर्विघ्नं यज्ञं कारयतेत्यर्थः॥ ३४ ॥

ज्योतिरसि विश्वरूपं विश्वेषां देवानाꣳ समित्। त्वꣳ सोम तनूकृद्भ्यो द्वेषोभ्योऽन्यकृतेभ्य उरु यन्तासि वरूथꣳ स्वाहा। जुषाणो अप्तुराज्यस्य वेतु स्वाहा॥ ३५ ॥

का० [ ५, ४, २६ ] ध्रुवायाः पुरस्तात् पृषदाज्यमाज्यं

*दधिमिश्रं पञ्चगृहीतं ज्योतिरसीति समिदन्तेनेति॥*
आज्य! त्वं ज्योतिरसि किंभूतं विश्वरूपं सर्वरूपं मनुष्या-
हुतिषूपयुक्तत्वाद्विश्वरूपरूपत्वम् आज्यत्वाद्वा दीप्यमानत्वाद्वा
ज्योतिष्ट्वम्। विश्वेषां सर्वेषां देवानां समित्समिन्धनं सम्य-
ग्दीपकम् देवा ह्याज्यं भुक्त्वा दीप्यन्ते॥ का० [८, ७, १]
प्रदीप्तमिध्मं त्वᳪ सोमेति। प्रचरण्याभिजुहोतीति। जुहूरिव
होमसाधना काचित् स्रुक् प्रचरणीत्युच्यते॥ अवसानरहिता
सोमदेवत्या गायत्री भृगुसुतकृतदृष्टा। तनूनं शरीरं कृन्तन्ति
छिन्दन्तीति तनूकृतो राक्षसाः। कृती छेदने। द्विषन्तीति
द्वेषांसि दौर्भाग्यानि। अन्यैरस्मद्विरोधिभिः कृतानि प्रेरि-
तान्यन्यकृतानि। हे सोम! त्वं तेभ्यो यन्तासि
यच्छतीति यन्ता यम उपरमे तृच्। यथा तादृशा अस्मान्न
बाधन्ते तथास्मान् सुरक्षितप्रदेशे संस्थाप्य पालयसीत्यर्थः।
तस्मात् त्वमेवास्माकमुरु प्रभूतं वरूथं बलमसि तस्मै तुभ्यमिदं
हुतमस्तु। सोमं नेतुं तमुद्दिश्यासावाज्याहुतिर्हुतेति भावः॥
[ का० ७, ८, २ ] जुषाणोऽप्तुरिति द्वितीयामिति। जुहो-
तीत्यनुवर्त्तते॥ अप्तुदेवत्यैकपदा विराट् यजुरन्ता विराजो
दश इत्युक्तेर्दशाक्षरत्वाद्विराट्। अप्तुश्चात्र सोमः आप्नोति
पीतः सन् शरीरमित्याप्तुः आपस्तृ व्याप्तौ आप्नोतेर्ह्रस्वश्चेति
[ उणा० १, ७४ ] तुप्रत्ययो धातोर्ह्रस्वश्च। जुषाणः प्रीय-
माणोऽप्तुः सोम आज्यस्य वेतु आज्यं पिबतु कर्मस्वपीति
केचित्। स्वाहा तस्मै सुहुतमस्तु॥ २५॥

अग्ने नय सुपथा राये अस्मान्विश्वानि
देव वयुनानि विद्वान्। युयोध्यस्मज्जुहुराण-
मेनो भूयिष्ठां ते नम उक्तिं विधेम॥ २६॥

का० [ ८, ७, ६ ] अग्ने नयेति वाचयतीति ॥ आग्नेयी त्रिष्टुबगस्त्यदृष्टा । हे अग्ने हे देव ! विश्वानि सर्वाणि वयुनानि मार्गान् ज्ञानानि वा विद्वान् जानानस्त्वमस्माननुष्ठातॄन् राये धनाय यज्ञफलाय सुपथा शोभनमार्गेण नय प्रापय । किञ्च अस्मदस्मत्तोऽनुष्ठातृभ्यः एनः पापं युयोधि पृथक्कुरु । यु मिश्रणामिश्रणयोः यौतेः शपः श्लुः वा छन्दसीति [ पा० ३, ४, ८८ ] हेः पित्त्वपक्षे अङ्कितश्चेति [ पा० ६, ४, १०३ ] हेर्धि पित्त्वाद्गुणः । किम्भूतमेनः जुहुराणम् । हृर्छा कौटिल्ये अस्मात् हृर्छतेः सनो लुक् छलोपश्चेति [ उणा० २, ८८ ] औणादिकसूत्रेणानच्प्रत्यये रूपम् ह्वर्छितुं कुटिलीकर्त्तुमिच्छतीति जुहुराणम् अभिलषितक्रियाप्रतिबन्धकमित्यर्थः । किञ्च ते तव भूयिष्ठां बहुलतमां नमउक्तिं हविषां वचनं याज्यापुरोऽनुवाक्यालक्षणं विधेम करवाम । नम इत्यन्ननाम [ निघ० २, ७, २२ ] यद्वा नमस्कारविषयामुक्तिं सम्पादयाम ॥ ३६ ॥

अ॒यं नो॑ अ॒ग्निर्वरि॑वस्कृणोत्व॒यं मृधः॑ पु॒र ए॑तु प्रभि॒न्दन् । अ॒यं वाजा॑न् जयतु॒ वाज॑साताव॒यꣳ शत्रू॑न् जयतु॒ जर्हृ॑षाणः॒ स्वाहा॑ ॥ ३७ ॥

का० [ ८, ७, ७—८ ] उत्तरेण सदो हुत्वाग्नीध्रेऽग्निं निदधाति ग्रावद्रोणकलशसोमपात्राणि चायं न इति जुहोत्यस्मिन्निति । शालामुखीयमग्निं ग्रावादीनि च सदस उत्तरभागे नीत्वाग्नीध्रमण्डपे निधाय तत्रत्यधिष्ण्यगतेऽग्नौ घृतेन जुहुयादिति सूत्रार्थः ॥ आग्नेयी त्रिष्टुब्यजुरन्ता । अयमग्निर्नोऽस्माकं वरिवः धनं कृणोतु करोतु अयमेवाग्निर्मृधः संग्रामान् प्रभिन्दन् विदारयन् सन् पुर एतु अग्रतो

यातु अयमेवाग्निर्वाजमातौ वाजानामन्नानां सम्भजने निमित्ते वाजान् शत्रुसम्बन्धीन्यन्नानि अस्मभ्यं दातुं जयतु ततोऽयमेवाग्निर्जर्हृषाणोऽत्यर्थं हृष्यन् शत्रून् जयतु स्वाहा तुभ्यं सुहुतमस्तु ॥ ३७ ॥

उरु विष्णो विक्रमस्वोरु क्षयाय नस्कृधि। घृतं घृतयोने पिब प्र-प्र यज्ञपतिं तिर स्वाहा ॥ ३८ ॥

का० [ ८, ७, १५ ] उरु विष्णविति जुहोतीति। पूर्वमन्त्रेणाग्नीध्रीये होमोऽनेन त्वाहवनीय इति सूत्रार्थः॥ वैष्णव्यनुष्टुब्यजुरन्ता। हे विष्णो! व्यापिन् आहवनीय! उरु विक्रमस्व शत्रुषु बहुलं पराक्रमं कुरु किञ्च क्षयाय अस्मद्गृहनिवासाय नोऽस्मानुरु बहु यथा तथा कृधि कुरु। हे घृतयोने अग्ने! घृतं पिब हूयमानमिदमाज्यं भक्षय। अग्निर्यस्मै योनिरसृज्यत तस्मै घृतमुच्चभागिति श्रुतेर्घृतयोनिस्त्वम् किञ्च यज्ञपतिं यजमानं प्रतिर प्रकर्षेण वर्धय। प्रसमुपोदः पादपूरण इति [ पा० ८, १, ६ ] प्रशब्दस्य द्वित्वम्। स्वाहा तस्मै तुभ्यं सुहुतमस्तु ॥ ३८ ॥

देव सवितरेष ते सोमस्तꣳ रक्षस्व मा त्वा दभन्। एतत्त्वं देव सोम देवो देवाँ२॥ उपागा इदमहं मनुष्यान् सह रायस्पोषेण। स्वाहा निर्वरुणस्य पाशान्मुच्ये ॥ ३९ ॥

का० [ ८, ७, १७ ] दक्षिणेऽनसि कृष्णाजिनमास्तीर्य तस्मिन् सोमं निदधाति देव सवितरिति। अनसि शकटे॥ सावित्रं यजुः। हे सवितः! सर्वस्य प्रेरक देव! एष सोमस्ते

मवार्पितः तं तादृशं सोमं त्वं रक्षस्व पालय मा त्वा दभन् सोमस्य रक्षितारं त्वामसुरा मा विहिंसिषुः॥ का० [ ८, ७, १८ ] एतत्त्वमिति विसृज्योपनिष्क्रम्य इति। कृष्णाजिने स्थापितं बद्धं सोमं विसृज्योपस्थानं कुर्य्यादिति सूत्रार्थः॥ सौम्यं यजुः। हे सोम देव! त्वं देवः सन् भवदीयान् देवानेतदिदानीमुपागाः प्राप्तोऽसि अहं मनुष्यो यजमानो मदीयान्मनुष्यानिदमिदानीं रायः पोषेण सह पश्वादिधनेन सार्धमुपागतोऽस्मीत्यनुषङ्गः॥ का० [ ८, ७, १९ ] स्वाहा निरिति निष्क्रामति। हविर्धानमण्डपान्निर्गत्येति सूत्रार्थः॥ हानं हा न हा अहा स्वस्याहा स्वाहा स्वात्यागः सोमेन त्मानं निःक्रीयात्मीयोऽहमस्मीत्यर्थः। यद्वा स्वाहा सोमरूपमन्नं देवेभ्यो दत्तमस्तु अनेन सोमप्रदानेनाहं वरुणपाशान्निर्मुच्य निर्मुक्तोऽस्मि॥ ३९॥

**अग्ने॑ व्रतपास्त्वे व्र॑तपा या तव॑ तनूर्मय्यभू॑द्देषा सा त्वयि॒ यो मम॑ तनूस्त्वय्यभू॑दिय॒ꣳ सा मयि॑। यथायथं नौ॑ व्रतपते व्रतान्यनु॑ मे दीक्षां दीक्षाप॑तिरमꣳस्तानु तपस्तप॑स्पतिः॥ ४०॥**

का० [ ८, ३, ४, ] अग्ने व्रतपा इत्याहवनीये समिधमाधायेति॥ आग्नेयं यजुः यजमानोऽग्निशरीरेणात्मशरीरस्य कृतव्यत्ययोऽधस्तनं कर्मकलापं कृत्वाथ यथा स्वशरीरं कुर्वाण आह हे अग्ने! व्रतपाः स्वभावतः सर्वेषां व्रतानां पालकोऽसि तस्मात्कारणादिदानीमपि त्वे त्वं व्रतपाः मदीयव्रतस्य पालको भवेति शेषः। हे अग्ने! व्रतप्रार्थनकाले तव सम्बन्धिनी या तनूर्मयि अभूदवस्थिता सा एषा तव तनूः त्वयि

भवत्विति शेषः। यो या उ या च मम तनूस्त्वय्यभूत्सा इयं मयि भवतु। किञ्च हे व्रतपते! व्रतपालकाग्ने! नौ आवयोर्व्रतानि कर्माणि यथायथं यथास्वं स्वसम्बन्धमनतिक्रम्य सन्त्विति शेषः। अनुष्ठानरूपं व्रतं ममास्तु तत्पालनरूपं व्रतं तवास्त्वित्यर्थः। किञ्च दीक्षापतिः दीक्षायाः पालकोऽग्निः मे दीक्षां मदीयदीक्षार्थं नियममन्वमंस्त अनुमतवानङ्गीकृतवानित्यर्थः तपस्पतिः तपसः पालकोऽग्निस्तपो मदीयामुपसदमन्वमंस्तानुमतवान् ॥ ४० ॥

उरु विष्णो विक्रमस्वोरु क्षयाय नस्कृधि। घृतं घृतयोने पिब प्र-प्र यज्ञपतिं तिर स्वाहा ॥ ४१॥

इदादीं यूपसम्पादनमन्त्राः॥ का० [ ६, १, ३—४ ] गृहेषु यूपाहुतिं जुहोति चतुर्गृहीताज्यं स्रुवेण वोरु विष्णविति। चतुर्गृहीतमाज्यमाहवनीये जुहोति यूपं छेत्तुं गमिष्यन् सा यूपाहुतिरिति सूत्रार्थः॥ व्याख्याता ॥ ४१ ॥

अत्यन्यान् २॥ अगां नान्यान् २॥ उपागामर्वाक्त्वा परेभ्योऽविदं परोऽवरेभ्यः। तं त्वा जुषामहे देव वनस्पते देवयज्यायै देवास्त्वा देवयज्यायै जुषन्तां विष्णवे त्वा। ओषधे त्रायस्व। स्वधिते मैनꣳ हिꣳसीः ॥४२॥

का० [ ६, १, ५—७ ] आज्यशेषमादाय स तक्षा गच्छति यूपमभिमृशत्यत्यन्यानिति. प्राङ् तिष्ठन्नभिमन्त्रयते वेति। यूपाहुतिशेषाज्ययुतो यूपतक्षणार्थं वनं गत्वा यूपमभिमृशेदभिमन्त्रयेद्वेति सूत्रार्थः॥ वनस्पतिदेवत्यम्। वृक्षा द्विविधाः

यूप्या अयूप्याश्च पलाशखदिरबिल्वादयो यूप्याः निम्बजम्बीरादयस्त्वयूप्याः । हे पुरोवर्त्ति यूपवृक्ष ! त्वत्तोऽन्यान् कांश्चिद्यूप्यानपि समप्रदेशजन्मादिलक्षणरहितानत्यगाम् अतिक्रान्तवानस्मि अन्यांश्चायूप्यान्नोपागाम् किञ्च परेभ्यः वृक्षेभ्यो दूरवर्त्तिभ्योऽर्वाक् निकटं त्वा त्वामविदं लब्धवानस्मि अवरेभ्यो निकटेभ्यः परः परस्तादविदं विद्लृ लाभे पुषादीत्यङ् [ पा० ३, १, ५५ ] लुङि रूपम् किञ्च हे वनस्पते ! वनस्य पालक ! हे देव दीप्यमान वृक्ष ! देवयज्यायै देवयागार्थं तं तादृशं त्वां वयं जुषामहे सेवामहे देवा अपि देवयज्यायै त्वा जुषन्तां सेवन्ताम् ॥ का० [६, १, ११ ] स्रुवेणोपस्पृशति विष्णवे त्वेति । हे यूपवृक्ष ! त्वा त्वां विष्णवे यज्ञाय उपस्पृशामीति शेषः यज्ञो वै विष्णुरिति श्रुतेः ॥ का० [६, १, १२] ओषध इति कुशतरुणं तिरस्कृत्येति । यूपवृक्षस्य कुशमन्तर्धानं कुर्य्यादिति सूत्रार्थः ॥ हे ओषधे ! त्वं त्रायस्व स्वधितिभयात् मां रक्ष ॥ का० [ ६, १, १३ ] स्वधित इति परशुना प्रहरतीति ॥ हे स्वधिते परशो ! एनं यूपं मा बधीः ॥ ४२ ॥

द्यां मा लेखीर॒न्तरि॑क्षं॒ मा हि॑ꣳसीः पृथि॒व्या सम्भ॑व । अ॒यꣳ हि त्वा॒ स्वधि॑ति॒स्तेति॑जानः प्रणि॒नाय॑ मह॒ते सौभ॑गाय । अ॒तस्त्वं दे॑व वनस्पते श॒तव॑ल्शो॒ विरो॑ह स॒हस्र॑वल्शा॒ वि व॒यꣳ रु॑हेम ॥ ४३ ॥

इति माध्यन्दिनीयायां वाजसनेयिसंहितायां
पञ्चमोऽध्यायः ॥ ५ ॥

का० [ ६, १, १६ ] द्यां मा लेखीरिति पतन्तमभिमन्त्रयते

इति ॥ हे यूपवृक्ष ! द्यां द्युलोकं त्वं मा लेखीः मा हिंसीः । लिख अक्षरविन्यासे इह तु हिंसार्थः । अन्तरिक्षञ्च मा हिंसीः पृथिव्या सह सम्भव सङ्गतो भव । यूपस्य वज्ररूपत्वाल्लोकानां शान्तिराशास्यत इति भावः ॥ का० [ ६, १, १८—१९ ] अयꣳ हि त्वेति शोधनमभिमन्त्रणशेषा वा सविशेषोपदेशादिति ॥ हि यस्मात् हे छिन्न वृक्ष ! तेतिजानो ऽतितीक्ष्णोऽयं स्वधितिः कुठारो महते सौभगाय सौभाग्याय दर्शनीयत्वाय यद्वा सुभगो यज्ञः स एव सौभगः स्वार्थेऽण् यज्ञाय त्वां प्रणिनाय प्रणयति गृतत्वं प्रापयति । छन्दसि लुङ्लङ्लिट इति [ पा० ३, ४, ६ ] वर्त्तमाने लिट् । तिज निशाने अस्माद्यङ्लन्ताच्छानचि तेतिजान इति रूपम् । अतस्त्वया छेदान्न भेतव्यमिति भावः ॥ का० [ ६, १, २०—२१ ] अतस्त्वमित्याव्रश्चने जुहोति शृपं वेति ॥ हे देव वनस्पते ! अतोऽस्मात् स्थाणोः त्वं शतवल्शः शताङ्कुरः सन् विरोह विशेषेण जायस्व वयञ्च सहस्रवल्शाः पुत्रपौत्रादिभिर्बहुशाखोपेता विरुहेम प्रजायेमहि ॥ ४३ ॥

श्रीमन्महीधरकृते वेददीपे मनोरमे ।
आतिथ्यात् स्थाणुहोमान्तः पञ्चमोऽध्याय ईरितः ॥ ५ ॥

---

## षष्ठोऽध्यायः ॥

दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒वे॒ऽश्विनो॑र्बा॒हुभ्या॑म् पू॒ष्णो हस्ता॑भ्याम् । आद॑दे॒ नार्य॑सि । इ॒दम॒हꣳ रक्ष॑सां ग्री॒वा अपि॑कृन्तामि । यवो॑ऽसि य॒वया॑-

स्मद्वेषो यवयारातीः। दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वा। शुन्धन्तां लोकाः पितृषदनाः। पितृषदनमसि ॥ १ ॥

सोमिकवेदिप्रधाने पञ्चमाध्याये आतिथ्यमारभ्य यूपनिर्माणपर्यन्ता मन्त्रा उक्ताः अग्नीषोमीयपशुप्रधाने षष्ठेऽध्याये यूपसंस्कारमारभ्य सोमाभिषवोद्योगपर्यन्ता मन्त्रा उच्यन्ते ॥ का० [ ६, २, ८ ] देवस्य त्वेत्यभ्रिमादाय यूपावटं परिलिखतीदमहमिति। [ ६, २, १५--१८ ] यवोऽसीत्यपसु यवानोप्य प्रोक्षत्यग्रमध्यमूलानि दिवे त्वेति प्रतिमन्त्रं प्रोक्षणीमोति सर्वत्र साकाङ्क्षत्वादवटे शेषमासिञ्चति शुन्धन्तामिति बर्हिरपि प्रागग्रदक्षिणं च प्रास्यति पितृषदनमसीति॥ एतानि षड् यजूंषि औदुम्बरीविषये [ ५ अध्या० २६ का० ] व्याख्यातानि ॥ १ ॥

अग्रेणीरसि स्वावेश उन्नेतॄणामेतस्य वित्तादधि त्वा स्थास्यति। देवस्त्वा सविता मध्वानक्तु। सुपिप्पलाभ्यस्त्वौषधीभ्यः। द्यामग्रेणास्पृक्ष आन्तरिक्षं मध्येनाप्राः पृथिवीमुपरेणादृंहीः ॥ २ ॥

का० [ ६, २, १९ ] प्रथमशकलमग्रेणीरसीति। यूपावटे प्रथमशकलं निक्षिपेदिति सूत्रार्थः॥ हे यूपशकल! त्वमग्रेणीरसि। अग्रे प्रथमं यूपस्य क्रियमाणस्य नीयतेऽपनीयत इत्यग्रेणीः। यूपस्य प्रथमावयवभूतो भवसीत्यर्थः। यद्वा अग्रे प्रथमं यूपमवटं प्रति नयतीत्यग्रेणीः पुरःसरः।

किम्भूतस्त्वम्। उन्नेतॄणामुन्नयनकर्तॄणामध्वर्य्यूणां स्वावेशः सुखेनावेशयितुं शक्यः ते ह्येनं यूपावटे सुखेनावेशयन्ति लघुत्वात्। स त्वमेतस्य कर्मणो वित्तात् कर्मणि षष्ठी। एतत्कर्म विद्धि जानीहि। किं तत्कर्म। यत यूपः त्वामधि स्थास्यति त्वदुपर्य्यवस्थानं करिष्यति तत्त्वया बोद्धव्यमित्यर्थः॥ का० [ ६, ३, २, ] देवस्य त्वेत्यनक्तीति यूपमिति शेषः॥ यूपदेवत्यम्। हे यूप! सविता देवः मध्वा मधुना मधुरेणाज्येन त्वा त्वामनक्तु। मध्वा अनित्यमागमशासनमिति नुमभाव॥ का० [ ६, ३, ३—४ ] चषालमुभयतोऽक्तं प्रतिमुञ्चति सुपिप्पलाभ्य इति। अथ उपरि चाज्येन लिप्तं चषालं यूपाग्रे स्थापयेदिति सूत्रार्थः॥ हे चषाल! त्वां यूपस्याग्रे प्रतिमुञ्चामीति शेषः। किमर्थमोषधीभ्यः व्रीह्याद्योषधिनिष्पत्त्यर्थम् किम्भूताभ्य ओषधीभ्यः सुपिप्पलाभ्यः शोभनफलयुक्ताभ्यः इत्यर्थः॥ का० [ ६, ३, ७] द्यामग्रेणोत्स्पृक्षयतीति। उन्नतं कुर्य्यादित्यर्थः। यूपदेवत्यम् यूपस्य महिमोच्यते। हे यूप! त्वमग्रेणाग्रभागेन द्यां दिवमस्पृक्षः स्पृष्टवानसि। स्पृशेर्लुङि शल इगुपधादनिटः क्स इति [ पा० ३, १, ४५ ] क्सप्रत्ययः। मध्येन मध्यभागेनान्तरिक्षमा अप्राः आपूरितवानसि। प्रा पूरणे। उपरेणाधोभागेन अनिष्टप्रदेशेन पृथिवीं भूमिमदृंहीः दृढीकृतवानसि॥ २॥

या ते धामान्युश्मसि गमध्ये यत्र गावो भूरिशृङ्गा अयासः। अत्राह तदुरुगायस्य विष्णोः परमं पदमवभाति भूरि॥ ब्रह्मवनि त्वा क्षत्रवनि रायस्पोषवनि पर्य्यूहामि। ब्रह्म दृꣳह क्षत्रं दृꣳहायुर्दृꣳह प्रजां दृꣳह॥ ३॥

का० [ ६, ३, ८ ] या त इति मिनोतीति । अवटे यूपं प्रक्षिपेदित्यर्थः ॥ यूपदेवत्या त्रिष्टुप् दीर्घतमोदृष्टा । हे यूप ! या यानि ते तव धामानि स्थानानि गमध्यै गन्तुं वयमुश्मसि उश्मः कामयामहे । तुमर्थे से इत्यादिना [ पा० ३, ४, ९ ] गच्छतेस्तुमर्थे कध्यैन्प्रत्ययः नित्त्वादाद्युदात्तः । उश्मसि वश कान्तौ लटि उत्तमबहुवचने शपो लोपे सम्प्रसारणे इदन्तो मसीति [ पा० ७, १, ४६ ] इकारः । यानि तव स्थानानि गन्तुं वयमिच्छाम इत्यर्थः । किञ्च यत्र तेषु तव स्थानेषु गावो रश्मयः अयासः । अयन्तीति अयाः अय गतौ गन्तारो वर्त्तन्ते सर्वे किरणा येषु स्थानेषु गता इत्यर्थः । किम्भूता गावः भूरिशृङ्गाः भूरि बहु शृङ्गं दीप्तिर्येषां ते भूरिशृङ्गाः । प्रज्वलन्नामसु [ निघ० १, १४, ११ ] शृङ्गाणीति पठितम् । अहेत्येवार्थे । विष्णोः व्यापकस्य ब्रह्मणः तत् परममुत्कृष्टं पदं भूरि महत् आदित्यमण्डललक्षणमत्रैव अवभारि अवभाति । तकारस्थाने छान्दसो रेफः । यद्वा भूरि बहुप्रकारं यथा तथा अत्राह तत्रैव एष्वेव स्थानेषु अवभाति शोभते । किम्भूतस्य विष्णोः उरुगायस्य गाङ् गतौ गानं गायः उरुर्गायो गतिर्यस्य महागतेरित्यर्थः । यद्वा उरुभिर्महात्मभिर्गीयते स्तूयतेऽसावुरुगायस्तस्य । तादृगस्थानप्राप्तिहेतुभूतकर्मणि हे यूप ! त्वमवावटे तिष्ठेत्याशयः ॥ का० [ ६, ३, १० — ११ ] ब्रह्मवनि त्वेति पांशुभिः । ब्रह्म दृꣳहेति मैत्रावरुणदण्डेन समन्तं त्रिः पर्यूषतीति ॥ हे यजुषी औदुम्बरीविषये [ ५ अध्या० २७ क० ] व्याख्याते ॥ ३ ॥

विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः सखा ॥ ४ ॥

का० [ ६. ३. १२ ] विष्णोः कर्माणीति वाचयति यूपमन्वारब्धमिति । यूपं स्पृष्टवन्तं यजमानं वाचयेदिति सूत्रार्थः ॥ हे वैष्णव्यौ गायत्री मेधातिथिदृष्टे । हे ऋत्विजः ! विष्णोः यज्ञाधिष्ठातुः कर्माणि सृष्टिसंहारादिचरितानि यूयं पश्यत यतो यैः कर्मभिः व्रतानि भवदीयानि लौकिकवैदिककर्माणि पस्पशे बद्धवान् निर्मितवानित्यर्थः । स्पश बन्धने । स विष्णुरिन्द्रस्य युज्यः वृत्रवधादिकार्ये स योज्योऽनुरूपः सखा मित्रम् ॥ यद्वा विष्णोः यज्ञस्य कर्माणि वीर्याणि पश्यत यतो यैर्वा यैर्व्रतानि आधानपशुबन्धादीनि कर्माणि पस्पशे आत्मनि बद्धवान् यद्वा यैर्यैर्व्रतानि कर्माणि अग्निवायुसूर्य्याणां स्वानि स्वानि एतान्यप्रमत्ताः कुर्वन्त्येवं पस्पशे निबद्धवान् शिष्टं समानम् ॥ ४ ॥

तद्विष्णोः परमं पदꣳ सदा पश्यन्ति सूरयः दिवीव चक्षुराततम् ॥ ५ ॥

का० [६. ३. १३] तद्विष्णोरिति चषालमीक्षमाणमिति । यूपकटकं प्रेक्षमाणं यजमानं वाचयेदिति सूत्रार्थः ॥ सूरयः विद्वांसो वेदान्तपारगा विष्णोः तत्परमं पदं स्वरूपं सदा पश्यन्ति । कीदृशम् । दिवि आकाशे निरावरणे चक्षुरिवाततं व्याप्तम् । यद्वा यत् दिवि आकाशे चक्षुरादित्यमण्डलमाततं विस्तारितम् इवोऽनर्थकः चक्षुःशब्देनान्यत्रापि मण्डलमुच्यते चक्षुर्मित्रस्य वरुणस्य [ ७ अध्या० ४२क० ] तच्चक्षुर्देवहितम् [ ३६ अध्या० २४क० ] ॥ ५ ॥

परिवीरसि परि त्वा दैवीर्विशो व्ययन्तां परीमं यजमानꣳ रायो मनुष्याणाम् । दिवः

सूनुरसि। एष ते पृथिव्यां लोक आरण्यस्ते पशुः ॥ ६ ॥

का० [ ६, ३, १५ ] त्रिगुणा त्रिव्यामा कौशी रशना तया नाभिमात्रे त्रिवृतं परिव्ययति परिवीरसीति। त्रिभिर्गुणैरवयवैः कल्पिता त्रिव्याममिता कुशसम्बन्धिनी या रशना रज्जुस्तया नाभिप्रमाणे यूपप्रदेशे आवृत्तित्रयं यथा भवति तथा यूपमावेष्टयेदिति सूत्रार्थः ॥ यूपदेवत्यं यजुः। हे यूप! त्वं परिवीरसि परिवीता रशनया व्याप्ता वेष्टितोऽसि यद्वास्माभिः परिवीतोऽसि। व्येञ् संवरणे इत्यस्य क्तप्रत्ययार्थे क्विपि सम्प्रसारणम्। किञ्च दैवीर्विशः देवसम्बन्धिन्यः प्रजाः मरुद्गणादयः त्वा त्वां परिव्ययन्तां परितो वेष्टयन्तु। यद्वा दैवीर्विशः पशवः त्वा परिव्ययन्ताम्। दैव्यो वा एता विशो यत्पशव इति श्रुतेः। किञ्च मनुष्याणां सम्बन्धिन्यो रायो धनानि इमं यजमानं परिव्ययन्तां वेष्टयन्तु यद्वा मनुष्याणामिति निर्धारणे षष्ठी मनुष्याणां मध्ये रायो धनानि इमं यजमानमेव परिव्ययन्ताम् ॥ का० [ ६, ३, १७ ] यूपशकलमस्यामवगूहत्युत्तरेणाग्निष्ठां दिवः सूनुरसीति। अष्टास्रे यूपस्य याऽस्रिरग्निसमीपे स्थिता साग्निष्ठा तस्या उत्तरभागे रशनायां स्वरुनामकं शकलमवगूहेदिति सूत्रार्थः ॥ हे स्वरो! त्वं दिवः द्युलोकस्य सूनुः पुत्रोऽसि द्युलोकाद्वृष्टिः ततो यूपो जायते यूपात् स्वरुरिति प्रणालिकया दिवः सूनुः स्वरुः ॥ का० [ ८, ८, २३ ] वर्षिष्ठाद्दक्षिणं वितष्टं द्वादशं निदधात्येष त इति। यूपैकादशिनीपक्षे वर्षिष्ठाद्यूपाद्दक्षिणभागे वितष्टमतष्टास्रिं द्वादशं यूपं निदधाति स्थापयति न तु निखनतीति सूत्रार्थः ॥ यूपदेवत्यम्। हे यूप! पृथिव्यामेष ते तव लोकः

याग्नेयस्थानमित्यर्थः॥ ननु पशवो वै यूपमुच्छ्रयन्तीति श्रुतेः [ ३, ७, ३—४ ] यूपे पशुना भवितव्यमित्यत आह ते तव आरण्योऽरण्ये भवोऽरण्यसम्बन्धी पशुः वने वर्त्तमानः पशुस्त- वैवेत्यर्थः॥ ६॥

उपावीरसि। उप देवान् दैवीर्विशः प्रागु- रुशिजो वह्नितमान्। देव त्वष्टर्वसु रम हव्या ते स्वदन्ताम्॥ ७॥

का० [ ६, ३, १८ ] उपवीरसीति तृणमादायेति॥ हे तृणविशेष! त्वमुपावीरसि उप समीपमवतिगच्छतीत्युपावीः यद्वा उप समीपेऽवस्थितोऽवति रक्षतीत्युपावीः पशोर्द्वितीयः सखा त्वमसीत्यर्थः॥ का० [ ६, ३, २० ] तेन पशुमुपस्पृश- त्युप देवानिति। गृहीतेन तृणेन पुरस्तात्प्रत्यञ्चं स्थितं पशुं स्पृशेदिति सूत्रार्थः॥ दैवीर्विशः पशवो देवानग्नीषोमादीनुप प्रागुः उपगच्छन्तु दैव्यो वा एता विशो यत्पशव इति श्रुतेः। इण् गतावित्यस्माच्छन्दसि लुङ्लङ्लिट इति [ पा० ३, ४, ६ ] कालमात्रे लुङ् इणो गा लुङीति [ पा० २, ४, ४५ ] गादेशः। किम्भूतान् देवान् उशिजो मेधाविनः यद्वा हवींषि कामयमा- मान् वहन्तीति वह्नयः अतिवह्नयो वह्नितमास्तान् यजमानं स्वर्गं प्रति प्रापयतां देवानां मध्ये श्रेष्ठतमानित्यर्थः। एवं पशून् प्रार्थ्य त्वष्टारमाह हे देव! हे त्वष्टः! त्वं वसु पशुलक्षणं धनं रम रमय। छन्दस्युभयथेति [ पा० ३, ४, ११७ ] शपोऽप्यार्धधातुकसञ्ज्ञत्वाण्णिचो लोपः। एवं त्वष्टारमुक्त्वा पुनः पशुमाह हे पशो! ते तव हव्या हवींषि स्वदन्ताम्। स्वद स्वाद आस्वादने। स्वादूनि भवन्तु यद्वा हवींषि स्वदन्तामा- स्वादयन्तु देवा इति शेषः पूर्ववण्णिचो लोपः॥ ७॥

रेवती रमध्वं बृहस्पते धारया वसूनि । ऋतस्य त्वा देवहविः पाशेन प्रतिमुञ्चामि धर्षा मानुषः ॥ ८ ॥

रयिर्धनं चीरादि यासां ता रेवत्यः । लिङ्गवचनव्यत्ययः रेवन्तः । रेवन्तो हि पशव इति श्रुतेः [ ३, ७, ३, १३ ] हे रेवन्तः चीरादिधनवन्तः पशवः ! यूयं यजमानगृहे रमध्वं संक्रीडध्वम् । एवं पशुमुक्त्वा बृहस्पतिमाह हे बृहस्पते ! हे ब्रह्मन् ! वसूनि पशुलक्षणानि धारया निश्चलीकुरु ब्रह्म वै बृहस्पतिः पशवो वस्विति श्रुतेः [३, ७, ३, १३] ॥ का० [ ६, ३, २६ ] द्विगुणरशनया द्विव्यामया कौश्या पाशं कृत्वान्तरा शृङ्गमभिदक्षिणं बध्नात्यृतस्य त्वेति । अवयवद्वयोपेतया व्यामद्वयपरिमितया कुशकृतया रज्ज्वा नागपाशं कृत्वा शृङ्गयोरन्तकाले पशुं बध्नाति कथमभिदक्षिणम् दक्षिणशृङ्गमभिमुखं पाशं प्रतिमुञ्चेदिति सूत्रार्थः ॥ हे देवहविः देवानां हविरूपपशो ! ऋतस्यावश्यम्भाविफलोपेतत्वात्सत्यस्य यज्ञस्य पाशेन त्वा त्वां प्रतिमुञ्चामि बध्नामि प्रतिपूर्वो मुञ्चतिर्बन्धने वर्तते । एवं पशुं सम्बोध्य शमितृे समर्पयति मानुषो धर्षा । ञिधृषा प्रागल्भ्ये विकरणपुरुषव्यत्ययः । मानुषः शमिता धृष्णोतु शमयितुं शक्नोतु पाशेन बद्धत्वादिति भावः । संहितायां द्व्यचोऽतस्तिङ इति [ पा० ६, ३, १३५ ] सूत्रेण धर्षेत्यत्र दीर्घः ॥ ८ ॥

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । अग्नीषोमाभ्यां जुष्टं नियुनज्मि । अद्भ्यस्त्वौषधीभ्योऽनु त्वा माता मन्य-

तामनु॑ पि॒तानु॒ भ्राता॒ सग॑र्भ्योऽनु॒ सखा॒ सयू॑थ्यः। अ॒ग्नीषोमा॑भ्यां त्वा॒ जुष्टं॒ प्रोक्षा॑मि ॥ ९ ॥

का० [६, ३, २७] देवस्य त्वेति यूप इति। यूपे पशुं बध्नातीति शेष इति सूत्रार्थः॥ अग्नीषोमदेवताभ्यां जुष्टमभिरुचितं पशुं नियुनज्मि निबध्नामि व्याख्यानमन्यत्॥ का० [६, ३, ३०] अद्भ्यस्त्वेति पशुं प्रोक्षणीभिः प्रोक्षतीति। हे पशो! अद्भ्यः ओषधीभ्यः। अत्र विभक्तिव्यत्ययः अद्भिरोषधिभिश्च। त्वा त्वां प्रोक्षामि मेध्यं करोमि। किम्भूतं त्वाम्। अग्नीषोमाभ्यां जुष्टं प्रीतम् दर्भैरपामुत्पूतत्वादोषधीनामपि प्रोक्षणसाधनत्वमस्त्येव। स्वमातृभक्षिताभ्यां तृणोदकाभ्यां पशोरुत्पन्नत्वात्तेनोभयेन प्रोक्षणं युक्तम्। तदाह तित्तिरिः अद्भ्यस्त्वौषधीभ्यः प्रोक्षामीत्याहाद्भ्यो ह्येष ओषधीभ्यः सम्भवति। किञ्च हे पशो! एवं प्रोक्षितं त्वां माता भूमिरनुमन्यतां तथा पिता द्यौरनुमन्यताम् सगर्भ्यो समानगर्भे उदरे भवः सोदरो भ्राता अनुमन्यताम् सयूथ्यः समानयूथे भवः सखा सुहृत् अनुमन्यताम्॥ ९॥

अ॒पां पे॒रुर॑सि। आपो॑ दे॒वीः स्व॑दन्तु स्वा॒त्तञ्चि॒त्सद्दे॑वह॒विः। सं ते॑ प्रा॒णो वाते॑न गच्छ॒ता॒ᳫं समङ्गा॑नि॒ यज॑त्रैः सं य॒ज्ञप॑तिरा॒शिषा॑ ॥ १० ॥

का० [६, ३, ३१] अपां पेरुरित्यास्य उपगृह्णातीति। पशोर्मुखे प्रोक्षणीर्धारयेदिति सूत्रार्थः॥ पशुदेवतम् हे पशो! त्वमपां जलानां पेरुः पानशीलोऽसि। पिबतीति पेरुः औणादिक एरुप्रत्ययः। उदकपानशीलो भवसि ततः इदं

पिबेत्यर्थः॥ का० [ ६, ३, ३२ ] आपो देवीरित्यधस्ता दुपोक्षतीति। पशोरधोभागे हृदि प्रोक्षेदिति सूत्रार्थः॥ हे पशो! आपो देवीः अनुगा देव्यः स्वदन्तु त्वामास्वादयन्तु भक्ष यन्तु। यद्वा आपो देव्यः स्वदन्तु पशुं भक्षयन्तु। को गुण इति चेत् स्वात्तं चित् चिदित्यव्ययं हेत्वर्थे हि यतो देवहविः देवानां हविः पशुलक्षणं स्वात्तमास्वादितं सत् शोभनं देव योग्यं भूयादिति शेषः। अद्भ्यस्त्वे त्यादिमन्त्रत्रयेणोपरिष्टा दुखेऽधोभागे पशोः प्रोक्षणेन सर्वं मेध्यं करोतीति तित्ति- रिणा प्रतिपादितम् तदाह उपरिष्टात् प्रोक्षत्युपरिष्टादेवैनं मेध्यं करोति पाययत्यन्तरत एवैनं मेध्यं करोत्यधस्तादुपोक्षति सर्वमेवैनं मेध्यं करोतीति॥ का० [ ६, ४, २ ] उत्तरमाघार- माघार्य पशुं पूर्वं समनक्ति ललाटाᳫंसश्रोणिषु सं त इति प्रतिमन्त्रमिति। उत्तराघारहोमानन्तरं ध्रुवास्समञ्जनादर्वा- गेव भाले अंसयो श्रोण्योश्च जुह्वा व पशुं समनक्ति सं त इति त्रिभिः प्रतिमन्त्रमिति सूत्रार्थः॥ पशुदेवतयजूंषि॥ लला- टाञ्जनमन्त्रः हे पशो! ते तव प्राणो वाह्येन वातेन सङ्गच्छ- ताम्। अथांसयोर्मन्त्रावृत्तिः अङ्गानि अंसादीनि यजत्रैः यागैः सङ्गच्छन्ताम् इज्यन्त इति यजत्राः। अथ श्रोण्योः यज्ञपतिर्यजमान आशिषा यज्ञफलेन सङ्गच्छताम्॥ १०॥

घृतेनाक्तौ पशूᳫंस्त्रायेथाम्। रेवति यज- माने प्रियं धा आविश। उरोरन्तरिक्षात् सजू- र्देवेन वातेनास्य हविषस्त्मना यज समस्य तन्वा भव। वर्षो वर्षीयसि यज्ञे यज्ञपतिं धाः। स्वाहा देवेभ्यः। देवेभ्यः स्वाहा॥ ११॥

का० [ ६, ४, १२ ] स्वरुमादायाक्तोभौ जुह्वग्रे ताभ्यां पशोर्ललाटमुपस्पृशति घृतेनाक्ताविति। विशसिता दत्तं शासं गृहीत्वा स्वयमेव यूपात् स्वरुमादाय तावसिस्वरू जुह्वग्रे घृतेनाक्ता ताभ्यामसिस्वरुभ्यां पशोर्ललाटं स्पृशेदिति सूत्रार्थः॥ स्वरुशासदैवतम् हे स्वरुशासौ! युवां घृतेनाक्तौ सन्तौ पशून् बहुवचनं पूजार्थम् एतं पशुं त्रायेथाम् पालयेथाम्॥ का० [ ६, ५, ११ ] रेवति यजमान इति वाचयतीति। यजमानं वाचयेदित्यर्थः। वाग्देवतम् वाग्वै रेवतीति श्रुतेः [ ३, ८, १, १२] हे रेवति धनवति वाग्देवते! यजमानेऽस्मिन् प्रियमभिप्रेतं धाः धेहि। बहुलं छन्दस्यमाङ्योगेऽपीत्यडभावः [ पा० ६, ४, ७५ ]। आविश ज्ञानप्रदानेन यजमानं प्रविश। किञ्च हे रेवति! वातेन देवेन सजूः समानप्रीतिर्भूत्वा उरोर्विस्तीर्णादन्तरिक्षाद्यजमानं गोपायेति शेषः। किञ्चास्य पशुलक्षणस्य हविषस्त्मना आत्मना यज। मन्त्रेष्वाङ्यादेरात्मन इति [ पा० ६, ४, १४१ ] आकारलोपः। किञ्चास्य पशोस्तन्वा शरीरेण सम्भव एकीभव। हे रेवति! यजमानरूपेण पशुरूपेण चात्मना भूत्वात्मना च यजेति तात्पर्यार्थः॥ का० [६, ५, १५] पश्चात्तृणमुपास्यति वर्षो वर्षीयसीति। शामितस्य पश्चात् प्रागग्रं तृणमुपास्यति हस्तस्थतृणद्वयमध्ये एकं क्षिपति विशसनीयस्य पशोर्भूमिस्पर्शपरिहारार्थमिति सूत्रार्थः॥ तृणदेवतम् हे वर्षो! वर्षादुत्पन्नं वर्पुः तत्सम्बोधनं वर्षो वर्षप्रसव हे तृण! यद्वा वर्षो विस्तीर्णं वर्षीयसि विस्तीर्णतरे यज्ञे यज्ञपतिं यजमानं धाः धेहि॥ का० [ ६, ५, २४ ] देवेभ्यः स्वाहेति जुहोतीति। मन्त्रयोरर्थैक्येऽपि पाठभेदतात्पर्यं तित्तिरिराह। पुरस्तात् स्वाहाकृतयोऽन्ये देवा उपरिष्टात् स्वाहाकृतयोऽन्ये स्वाहा देवेभ्यो देवेभ्यः स्वाहेति॥११॥

माहिर्भूर्मा पृदाकुः। नमस्त आतानानर्वा प्रेहि। घृतस्य कुल्या उप ऋतस्य पथ्या अनु ॥ १२ ॥

का० [ ६, ५, २६ ] वपाश्रपणीभ्यां नियोजनीं चात्वाले प्रास्यति माहिर्भूरिति। वपा श्रप्यते याभ्यां ते वपाश्रपण्यौ काष्ठविशेषौ ताभ्यां कृत्वा नियोजनीं पशुबन्धनरज्जुं द्विगुणां चात्वाले क्षिपेदिति सूत्रार्थः॥ रज्जुर्देवतम् हे रज्जो! त्वमहिः सर्पाकारा मा भूः मा भूयाः पृदाकुः अजगराकारापि मा भूः॥ का० [ ६, ६, १ ] पान्नेजनहस्तां वाचयति नयन्नमस्त आतानेति। पादौ निज्यते क्षाल्यते येन स पान्नेजनः पादनेजनार्थं उदककलशः पादग्रहणमङ्गावयवोपलक्षणम् पान्नेजनो मुखाद्यवयवशोधनार्थो जलकलशो हस्ते यस्याः सा पान्नेजनहस्ता तां पत्नीं नयन् गार्हपत्यसमीपात्पशुशोधनाय नयन् सन् प्रतिप्रस्थातासुं मन्त्रं तां वाचयेदिति सूत्रार्थः॥ यज्ञदेवतम् आ समन्तात्तन्यते विस्तार्यते इत्यातानो यज्ञः। यज्ञो वा आतानो यज्ञो हि तन्वत इति श्रुतेः [ ३, ८, २, २ ] हे आतान यज्ञ! ते तुभ्यं नमः त्वमनर्वा शत्रुरहितः सन् प्रेहि समाप्तिपर्यन्तं प्रकर्षेण गच्छ। इयर्त्तिरभार्थमित्यर्वा नास्त्यर्वा यस्यासावनर्वा अनर्वा प्रेहीत्यसपत्नो न प्रेहीति श्रुतेः। अनर्वा प्रेहीत्याह भ्रातृव्यो वा अर्वा भ्रातृव्यापनुत्त्यै इति तित्तिरिवाक्यात्। किञ्च ऋतस्य यज्ञस्य पथ्याः पथि भवाः घृतस्य कुल्याः घृतनद्यः अनुलक्ष्य उप प्रेहि गच्छ सन्नाय्यपृषदाज्यकुल्योपलक्षणार्थं घृतकुल्याग्रहणम् अत्र यज्ञे बहु घृतमाहुतमित्यभिप्रायः॥ १२ ॥

देवीरापः शुद्धा वोढ्व१ँ सुपरिविष्टा देवेषु ।
सुपरिविष्टा वयं परिवेष्टारो भूयास्म ॥ १३ ॥

एवं यज्ञं स्तुत्वेदानीमापः स्तूयन्ते । अर्धर्चद्वैवत्यमर्धमाशीर्देवतम् हे आपो देव्यः ! यूयं देवेषु वोढ्वं पशुमिति शेषः एनं पशुं देवान् प्रति वहत प्रापयत । वह प्रापणे अस्य लुङि तङि मध्यमबहुवचने अडभावे रूपम् । किम्भूता यूयम् शुद्धाः स्वभावतः तथा सुपरिविष्टाः साधु परितः सर्वतो निविष्टाः पात्रे जनोपात्ते । किञ्च वयमपि सुपरिविष्टाः देवेष्विति पदमिहाप्यनुवर्त्तते वयमपि देवेषु मध्ये ऽवस्थितास्तैरेव देवैः सुपरिविष्टाः तर्पिताः सन्तस्तेषामेव देवानां परिवेष्टारः परिवेषणकर्त्तारो भूयास्मेत्याशीः ॥ १४ ॥

वाचं ते शुन्धामि । प्राणं ते शुन्धामि ।
चक्षुस्ते शुन्धामि । श्रोत्रं ते शुन्धामि । नाभिं
ते शुन्धामि । मेढ्रं ते शुन्धामि । पायुं ते
शुन्धामि । चरित्रा१ँस्ते शुन्धामि ॥ १४ ॥

का० [६, ६, २—३] पशोः प्राणाञ्छुन्धति पत्नी मुखं नासिके चक्षुषी कर्णौ नाभिं मेढ्रं पायुं पादान् संहृत्य वाचं ते शुन्धामीति प्रतिमन्त्रमिति । पत्नी पशुसमीप उपविश्य मृतस्य पशोः प्राणान् मुखादीन्यष्टौ प्राणायतनानि प्रतिमन्त्रं शुन्धति शोधयति अद्भिः स्पृशतीति सूत्रार्थः ॥ पशुदेवतानि । हे पशो ! अहं ते तव वाचं वागिन्द्रियं शुन्धामि शोधयामि । एवमग्रेऽपि प्राणं प्राणवायुं प्राणेन्द्रियं चक्षुरिन्द्रियं श्रोत्रेन्द्रियं नाभिं नाभिच्छिद्रं मेढ्रं लिङ्गम् पायुं गुदम् चरन्ति गच्छन्त्येभिरिति चरित्राः पादाः एवन्त्वदीयानि सर्वेन्द्रियाणि शुन्धामि ॥ १४ ॥

मनस्त आप्यायताम्। वाक्त आप्यायताम्। प्राणस्त आप्यायताम्। चक्षुस्त आप्यायताम्। श्रोत्रं त आप्यायताम्। यत्ते क्रूरं यदास्थितं तत्त आप्यायतां निष्ट्यायतां तत्ते शुध्यतु। शमहोभ्यः। ओषधे त्रायस्व। स्वधिते मैनꣳ हिꣳसीः॥ १५॥

का० [ ६, ६, ४—५ ] शेषेण यजमानश्च शिरःप्रभृत्यनुषिञ्चतो मनस्त इति शिर इति। पात्नीजनशेषेण यजमानः चकाराद्ध्वर्युश्च पशोः शिरआद्यङ्गान्यनुषिञ्चतः तत्र शिरसा मन्त्रमाह मनस्त इति शिर इति। मन्त्राः पश्वङ्गदेवतानि। हे पशो! ते तव मनः आप्यायतां वर्धताम्। लिङ्गादस्य विनियोग उक्तः। वागाप्यायतामित्यादिमन्त्राणां लिङ्गादेव विनियोगः लिङ्ग इति सूत्रकृता नोक्तः। वाक्त इति मुखं प्राणस्त इति नासिके चक्षुस्त इति चक्षुषी श्रोत्रं त इति कर्णौ एतानि मुखादीनि तव शाम्यन्तु॥ का० [ ६, ६, ६ ] यत्ते क्रूरमित्यङ्गानीति। सर्वाङ्गान्यवशिष्टान्यनुषिञ्चत इत्यर्थः॥ हे पशो! यत्ते तव क्रूरं बन्धननिरोधादिकं क्रूरमस्माभिः कृतं यच्च आस्थितं छेदादिकं कर्तुमुपस्थितं शमित्रा तत्सर्वं ते तवाप्यायतां शाम्यतु। किञ्च तत्सर्वं निष्ट्यायतां संहतं भवतु छेद सङ्घातं अस्तु भवत्वित्यर्थः तत्सर्वं तव शुध्यतु शुद्धं भवतु॥ का० [ ६, ६, ७ ] शमहोभ्य इति पश्चात्पशोर्निषिञ्चत इति। पशोर्जघनदेशे पात्नीजनशेष मुभावपि निषिञ्चतामिति सूत्रार्थः॥ अहोभ्यः दिवसादिकालविशेषेभ्यः शं सुखमस्माकं पशोर्वा भूयादिति शेषः॥

का० [ ६, ६, ८ ] उत्तानं पशुं कृत्वाग्रेण नाभिं तृणं निदधात्योषध इति। नाभेरग्रे ऽङ्गुलचतुष्टये तृणं निदध्यादिति सूत्रार्थः॥ मन्त्रो व्याख्यातः [४ अ० १ क०]॥ का० [६, ६, ८] स्वधित इति प्रज्ञातयाभिनिधाय छित्त्वेति। प्रज्ञातया प्रस्तुतया कृतचिह्नया घृताक्तयासिधारयाभिनिधाय तृणोपर्य्यसिधारां निधाय तूष्णीं सतृणामुदरत्वचं छिन्द्यादिति सूत्रार्थः॥ एनं पशुं स्वधिते मा हिंसीः॥ १५॥

रक्षसां भागोऽसि। निरस्तꣳ रक्षः। इदमहꣳ रक्षोऽभितिष्ठामीदमहꣳ रक्षोऽवबाध इदमहꣳ रक्षोऽधमं तमो नयामि। घृतेन द्यावापृथिवी प्रोर्णुवाथाम्। वायो वे स्तोकानाम्। अग्निराज्यस्य वेतु स्वाहा। स्वाहाकृते ऊर्ध्वनभसं मारुतं गच्छतम्॥ १६॥

का० [ ६, ६, ८ ] अग्रꣳ सव्ये कृत्वा दक्षिणेन मूलमुभयतोऽनक्ति लोहितेन रक्षसामिति। यत्तृणं नाभ्यग्रे स्थापितं तस्य छिन्नस्य तृणस्याग्रं वामहस्तेन धृत्वा दक्षिणहस्तेन मूलं धृत्वा तद् द्विगुणीकृत्याग्रे मूले च पशुच्छेदननिष्पन्नेन रक्तेनाञ्ज्यादिति सूत्रार्थः॥ रक्षोदेवत्यम् हे लोहिताक्त तृण! त्वं रक्षसां भागोऽसि॥ का० [ ६, ६, १० ] निरस्तमित्यपास्यतीति। लोहिताक्तं तृणमुत्करे त्यजेदिति सूत्रार्थः॥ यद्यज्ञविघातकं रक्षोऽस्ति तन्निरस्तं परित्यक्तम्॥ का० [ ६, ६, ११ ] इदमहमित्यभितिष्ठति यजमान इति। उत्करे क्षिप्तं रुधिराक्तं तृणं यजमानोऽभितिष्ठतीति सूत्रार्थः॥

यत्तृणरूपं रक्षोऽध्वर्युणा निरस्तं तदिदं रक्षोऽहं यजमानोऽभितिष्ठामि अभितः पादेनोत्क्रम्य तिष्ठामि । न केवलमभितिष्ठामि किन्तु अहमिदं रक्षोऽवबाधे अवाचीनं यथा भवति तथा नाशयामि किञ्च अहमिदं रक्षोऽधममत्यन्तनिकृष्टं तमो नरकं नयामि प्रापयामि ॥ का० [ ६, ६, १२ ] वपामुत्खिद्य वपाश्रपण्यौ प्रोर्णौति घृतेन द्यावापृथिवी इति । पशूदराद्वपां निष्काश्य तया वपया वपाश्रपण्यावाच्छादयेदिति सूत्रार्थः ॥ वपाश्रपण्योर्द्यावापृथिव्यावध्यस्ते उच्यते हे द्यावापृथिवी ! युवां घृतेनोदकेनात्मानं प्रोर्णुवाथामाच्छादयेथां परस्परम् । ऊर्णुञ् आच्छादने । आहुतिपरिणामाभिप्रायमेतत् तथा चोक्तं ते वा एते आहुती हुते उत्क्रामत इत्युपक्रम्याहुतिपरिणाममिदं जगदिति ॥ का० [ ६, ६, १५ ] तृणाग्रञ्चाध्वर्युर्वायो वेरिति । वामहस्तधृतं तृणाग्रमाहवनीये क्षिपेदिति सूत्रार्थः ॥ वायुदेवतम् हे वायो ! त्वं स्तोकानां वपासम्बन्धिनां विप्रुषां वेः कर्मणि षष्ठी स्तोकान् विद्धि जानीहि ज्ञात्वा च पिबेत्यर्थः ते ह्यत्र तिष्ठन्ति । विदि ज्ञाने इत्यस्य लुङि मध्यमेकवचने दश्चेति [ पा० ८, २, ७५ ] दस्य रुत्वे कृते रूपम् अड्भाव आर्षः वेः विद्धि ॥ का० [ ६, ६, १७ ] वपां स्रुवेणाभिघारयत्यग्निराज्यस्येति ॥ अग्निराहवनीयः आज्यस्य वेतु आज्यं पिबतु स्वाहा सुहुतमस्तु ॥ का० [ ६, ६, २८ ] हुत्वा वपाश्रपण्यावनुप्रास्यति प्राचीं विशाखां प्रतीचीमितरां स्वाहाकृते इति वपां हुत्वोत्तरत उपविश्य वपाश्रपण्यावाहवनीय एव क्षिपेत् तत्प्रकारः विशाखां द्विशृङ्गां प्रागग्रां क्षिपेत् इतरामेकशृङ्गां प्रत्यगग्रामिति सूत्रार्थः ॥ स्वाहाकारेणाहुतिभावमुपगते सत्यौ युवां मारुतं गच्छतं वायुं प्राप्नुतां वायुर्हि प्रतिष्ठा यज्ञस्य ।

किम्भूतम् ऊर्ध्वनभसमूर्ध्वं नभ आकाशो यस्य स ऊर्ध्वनभाः तम् नभोमध्ये वर्त्तमानमित्यर्थः ॥ १६ ॥

इदमापः प्रवहतावद्यञ्च मलञ्च यत्। यच्चाभिदुद्रोहानृतं यच्च शेपे अभीरुणम्। आपो मा तस्मादेनसः पवमानश्च मुञ्चतु ॥ १७ ॥

का० [ ६, ६, २८ ] चात्वाले मार्जयन्ते सपत्नीका इदमापः प्रवहतेति। सर्वे ऋत्विजः चात्वालसमीपे अङ्गिरात्मानमभ्युक्षन्तीति सूत्रार्थः॥ अब्दैवत्या त्र्यवसाना महापङ्क्तिः पावमानश्चान्त्यः पादः यस्याः षट् पादा अष्टाक्षराः सा महापङ्क्तिः। हे आपः! इदं पशुमञ्ज्ञपननिमित्तं पापं प्रवहत किञ्च यच्चाद्यमवदनीयमभिशापादि यच्च मलं शरीरलग्नं प्रसिद्धं तच्च प्रवहत अपनयत। किञ्च यदहमनृतमसत्यमुक्त्वाभिदुद्रोह द्रुग्धवानस्मि। द्रुह जिघांसायाम् यच्चाहमभीरुणं बिभेतीति भीरुरभीरुस्तमभीरुणमनपराधिनमपराधी हि बिभेति एवंविधं शेपे शपितवानस्मि अनपराधिनं प्रति यन्मयाभिशापो दत्तः आपः तस्मादेनसः पापात् मा मां मुञ्चतु पृथक्कुर्वन्तु पवमानश्च सोमो वायुर्वा तस्मात् पापात् मां मुञ्चतु ॥ १७ ॥

सं ते मनो मनसा सं प्राणः प्राणेन गच्छताम्। रेडस्यग्निष्ट्वा श्रीणात्वापस्त्वा समरिणन्वातस्य त्वा ध्राज्यै पूष्णो रंह्या ऊष्मणो व्यथिषत्। प्रयुतं द्वेषः ॥ १८ ॥

का० [ ६, ८, ६ ] सं ते मन इति हृदयमभिघार्य सर्वमिति। जुहूस्थेन पृषदाज्येन पूर्वं हृदयमभिघार्य तूष्णीं सर्वं

पशुमभिघारयेदिति सूत्रार्थः॥ हृदयदेवतम् हे हृदय! ते तव पशोर्मनः देवानां मनसा सङ्गच्छताम् पृषदाज्येनाभिघारितं सत्। ते तव प्राणोऽपि देवानां प्राणेन सङ्गच्छतां सङ्गतोऽस्तु अभिघारितः॥ का० [६, ८, १२] रेडसीति वसां गृह्णोत्वेति। मांसपाकभाण्डे स्थितः स्नेहात्मको द्रवविशेषो वसा तां गृह्णीयादिति सूत्रार्थः॥ वसादेवतम् हे वसे! त्वं रेट् असि। रिषतिर्हिंसार्थः कर्मणि विच् रिष्टासि हिंसितेवाभासि अल्पत्वात्। पूर्णाऽल्पत्वं श्रुत्योक्तम् [३, ८, ३, २०] रेडसीति लेलयेव हि यूरिति लेलयाशब्दस्वाल्पवाचकः। अग्निः त्वा त्वां श्रीणातु श्री पाके क्र्यादिः श्रपयन् भूयसीं करोति यद्वाग्निराहवनीयस्त्वां श्रीणातु स्वीकरोतु। किञ्च आपः त्वा त्वां समरिणन् री वधे गतौ क्र्यादिः अत्र रिणातिर्विभर्त्यर्थे समभरन्नपुष्णन् यद्वा आपः त्वां समरिणन् सम्यक् प्राप्नुवन्तु तव शोषो मा भूदित्यर्थः आपो हि पच्यमानेभ्यः पश्वङ्गेभ्यो यं रसमुत्पादयन्ति सा वसेत्युच्यते तां त्वां गृह्णामीति शेषः। किमर्थं वातस्य ध्राज्यै गत्यै वातस्यान्तरिक्षे गतिर्भवत्विति तथा पूष्णो रंह्यै आदित्यस्य गत्यै रंहतिर्गत्यर्थः आदित्यस्य द्युलोके गतिर्भवत्विति वाय्वादित्ययोरप्रतिहतगमनसिद्ध्यर्थं त्वां गृह्णामीत्यर्थः। किञ्च ऊष्मणो व्यथिष्यत् ऊष्मान्तरिक्षं नहि ब्रह्मण ऊष्मेव ऊष्मागमन्तरिक्षं वसा व्यथतु कर्मणि षष्ठी यद्वा व्यत्ययेन प्रथमार्थे षष्ठी ऊष्मा व्यथिषत् व्यथतां वसां पीत्वा तृष्णाधिक्येन यथा मोदति वसारूपं हविस्तथाविधं भवत्वित्यर्थः अन्तरिक्षार्थं हि वसा गृह्यते होममन्त्रे [१८] अन्तरिक्षस्य हविरसीति लिङ्गात् इयं वसान्तरिक्षस्य तृप्तिं कृत्वातिरिक्ता भवत्वित्यर्थः अन्तरिक्षे च तृप्ते तत्प्रभवत्वाद् वायुसूर्ययोरपि स्वकर्मक्षमता

भवति तस्मादुच्यते वातस्य ते प्राज्या इत्यादि। अथ भय-चलनयोः अस्य लिङर्थे लेडिति [ पा० ३, ४, ७ ] लेटि-सिब्बहुलं लेटीति [ पा० ३, ४, ३४ ] सिप्प्रत्यये इतश्च लोपः परस्मैपदेष्विति [ पा० ३, ४, ९७ ] तिप इकारलोपे लेटोऽडाटाविति [ पा० ३, ४, ९४ ] अडागमे व्यथिषदिति रूपम्॥ का० [ ६, ८, १२ ] हिरभिघार्य प्रयुतमिति पार्श्वेन सङ्गृह्य जलमिना वेति। वसां हिरभिघार्य पार्श्वेनामिना वाज्यं वसां च मिश्रयेदिति सूत्रार्थः॥ द्वेषो दौर्भाग्यं प्रयुतं पृथग्भूतं वसायाः सकाशात् घृतमिश्रणेन॥ १८॥

घृतं घृतपावानः पिबत वसां वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहा। दिशः। प्रदिशः। आदिशः। विदिशः। उद्दिशः। दिग्भ्यः स्वाहा॥ १९॥

का० [ ६, ८, १७ ] वसैकदेशं जुहोमि घृतं घृतपावान इति। वसाहोमहवन्या वसाया एकदेशं जुहुयादिति सूत्रार्थः॥ वैश्वदेवं यजुः। वसाया हिरभिघारितत्वाद् घृत-मस्ति तत्र अत एवमाह। हे घृतपावानः! घृतं पिबन्तीति घृतपावानः पा पाने आतो मनिन्क्वनिबित्यादिना [ पा० ३, २, ७४ ] वनिप् घृतस्य पातारो देवाः! यूयं घृतं पिबत। हे वसा पावानः! वसायाः पातारो देवाः! यूयं वसां पिबत। एवं देवानुक्त्वा वसामाह हे वसे! त्वमन्तरिक्षस्य हविरसि स्वाहा सुहुतमस्तु॥ का० [ ६, ८, २१ ] दिशो व्याघारयति वसाशेषेण वाजिनवदिति। यथा वाजिनशेषेण दिग्व्याघारणमुक्तं तथे-त्यर्थः। तद् यथा [ का० ४, ४, १६—१७] दिशो व्याघारयति

दिश इति प्रतिमन्त्रं प्रदक्षिणं पुरस्तात् प्रथममुक्तमाभ्यां मध्ये पूर्वार्धे चेति ॥ षट् दिग्देवतानि यत्र स्वाहाकारः सर्वत्र साकाङ्क्षत्वादिति [ का० ४, ४, १८ ] वचनात् स्वाहा सर्वत्र युज्यते दिग्भ्यः स्वाहा प्रदिग्भ्यः स्वाहा आदिग्भ्यः स्वाहा विदिग्भ्यः स्वाहा उद्दिग्भ्यः स्वाहा सर्वाभ्यः दिग्भ्यः सुहुतमस्त्वित्यर्थः ॥ १९ ॥

ऐ॒न्द्रः प्रा॒णो अङ्गे॑ अङ्गे॒ निदी॑ध्यदै॒न्द्र उ॑दा॒नो अङ्गे॑-अङ्गे॒ निधी॑तः । देव॑ त्वष्ट॒र्भूरि॑ ते॒ सꣳ-स॑मेतु॒ सल॑क्ष्मा॒ यद्विषु॑रूपं॒ भवा॑ति । दे॒व॒त्रा यन्त॒मव॑से॒ सखा॒योऽनु॑ त्वा॒ मा॒ता पि॒तरो॑ मदन्तु ॥ २० ॥

का० [ ६, ८, १ ] ऐन्द्रः प्राण इति पशुꣳ संमृशतीति । पशुरूपं हविः स्पृशेदिति सूत्रार्थः ॥ इन्द्र आत्मा तत्सम्बन्धी प्राणः प्राणवायुरस्य पशोरङ्गे-अङ्गे सर्वेष्वङ्गेषु निदीध्यत् निहितः दिधीङ् दीप्तिदेवनयोः अस्य धातोर्दधात्यर्थे वर्त्तमानात् कर्मणि लेट् परस्मैपदं व्यत्ययेन लेटोऽडाटावित्यट् [ पा० ३, ४, ९४ ] । तथा ऐन्द्रः इन्द्रसम्बन्धी उदानवायुः पशोः सर्वेष्वङ्गेषु निधीतः निक्षिप्तः धीङ् आधारानादरयोः । अङ्ग इत्यादौ चेत्यङ्गशब्दस्य [ पा० ६, १, ११९ ] एङ् अति प्रकृत्या ॥ एवमनेन यजुषा पश्वङ्गेषु प्राणान् दत्त्वा त्वष्टारमाह । त्वाष्ट्री त्रिष्टुप् हे त्वष्टः ! त्वष्टृनामक देव ! यत् पश्वङ्गजातं सलक्ष्मा समानलक्षणं सत् छेदनेन विषुरूपं नानारूपं भवाति भवति तत् सर्वं ते तवानुग्रहेण भूरि बहुत्वमत्यन्तं संसमेतु सम्यगेकीभवतु प्रसमुपोदः पादपूरण इति [ पा० ८,

१, ६ ] समित्यस्य द्वित्वम्। पुनः पशुमाह। हे पशो! एवं प्राणैः स्वाङ्गैश्चानेन मन्त्रेण दृढीकृतं देवता यन्तं देवान् प्रति गच्छन्तं त्वा त्वां सखायो मित्रभूता इतरे पशवो माता पितरश्च अनुमदन्तु अभ्यनुजानन्तु बहुवचनं पूजार्थम् अवसे अवितुं प्रीणयितुम् तुमर्थे असेप्रत्ययः यद्वा अवितुं तन्मुखेन स्वर्गप्राप्त्या स्वकुलं सर्वमवितुमित्यर्थः॥ २०॥

स॒मु॒द्रं ग॑च्छ॒ स्वाहा॑। अ॒न्तरि॑क्षं गच्छ॒ स्वाहा॑। दे॒वᳪ स॑वि॒तारं॑ गच्छ॒ स्वाहा॑। मि॒त्रा-वरु॑णौ गच्छ॒ स्वाहा॑। अ॒हो॒रा॒त्रे ग॑च्छ॒ स्वाहा॑। छन्दा॑ᳪसि गच्छ॒ स्वाहा॑। द्यावा॑पृथि॒वी ग॑च्छ॒ स्वाहा॑। य॒ज्ञं ग॑च्छ॒ स्वाहा॑। सोमं॑ गच्छ॒ स्वाहा॑। दि॒व्यं नभो॑ गच्छ॒ स्वाहा॑। अ॒ग्निं वै॑श्वान॒रं ग॑च्छ॒ स्वाहा॑। मनो॑ मे॒ हार्दि॑ यच्छ। दिवं॑ ते धू॒मो ग॑च्छतु॒ स्व॒र्ज्योतिः॑ पृथि॒वीं भस्म॒-नापृ॑ण॒ स्वाहा॑॥ २१॥

का० [ ६, ८, १० ] प्रतिप्रस्थातोपयजति गुदतृतीयस्य प्रच्छेदमनुयाजेषु समुद्रं गच्छेति प्रतिमन्त्रमिति। अनुयाजेषु हूयमानेषु प्रतिप्रस्थाता पूर्वं स्थापितं गुदतृतीयभागमेकादशधा तिर्यक् प्रच्छिद्य प्रतिमन्त्रं जुहोतीति सूत्रार्थः॥ हे हविर्गुदावयवरूप! त्वं समुद्रादिनामकान् देवान् गच्छ प्राप्नुहि तर्पणायेति शेषः स्वाहा सुहुतमस्तु॥ का० [ ६, ८, ११ ] प्रतिवषट्कारᳪ हुत्वा मनो म इति मुखोपस्पर्शनमिति। प्रतिवषट्कारमेकैकं गुदकाण्डं हुत्वा सर्वान्ते

मुखं स्पृशेदिति सूत्रार्थः। हे समुद्रादिदेवतासमूह! हार्दि हृदयसम्बन्धि मे मनो यच्छ निबध्नीहि निबद्धं मनो हि स्वादायतनान्न च्यवते॥ का० [ ६, ८, १२ ] अनुयाजान्ते स्वरुं जुहोति दिवं ते धूम इति॥ स्वरुदैवतम् हे स्वरो! ते तव धूमः दिवं द्युलोकं गच्छतु वृष्ट्यै। तव ज्योतिः ज्वाला स्वः आदित्यं गच्छतु स्वःशब्देनादित्योऽभिधीयतेऽन्तरिक्षं वा॥ भस्मना पृथिवीमापृण समन्तात् पूरय। स्वाहा सुहुतमस्तु॥ २१॥

मापो मौषधीर्हिꣳसीः। धाम्नोधाम्नो राजँस्ततो वरुण नो मुञ्च। यदाहुरघ्न्या इति वरुणेति शपामहे ततो वरुण नो मुञ्च। सुमित्रिया न आप ओषधयः सन्तु दुर्मित्रियस्तस्मै सन्तु योऽस्मान् द्वेष्टि यं च वयं द्विष्मः॥ २२॥

का० [ ६, १०, ३ ] अभ्यवेत्य शुष्कार्द्रसन्धौ हृदयशूलमुपगूहति शुगसि तमभिशोच योऽस्मान्, द्वेष्टि यं च वयं द्विष्मो मापो मौषधीरिति चेति। जले प्रविश्य आलब्धस्य पशोर्हृदयस्थं मांसं यस्मिन् श्रितं स हृदयशूलस्तं शुष्कार्द्रभूप्रदेशयोः सन्धौ निगूहेत् भूमावधोमुखं क्षिपेत् शुगसि माप इति मन्त्राभ्यामिति सूत्रार्थः॥ हृदयशूलदेवतं यजुः। हे हृदयशूल! त्वमपो जलानि ओषधीश्च मा हिꣳसीः॥ का० [ ६, १०, ५, ] धाम्नो धाम्नः सुमित्रिया न इत्युपस्पृशन्त्यप इति। सर्वे ऋत्विग्यजमाना मन्त्राभ्यां जलं स्पृशन्तीति सूत्रार्थः॥ वरुणदेवतं यजुः हे राजन् वरुण!

आहवनीये समिदाधानं देवानाᳫं समिदसीति। स्नानानन्तरमाहवनीयमेत्य तस्मिन् समिधं दध्यात्॥ अग्निदेवतं यजुः। देवानां सम्बन्धिनी समित् इन्धनमसि। यद्वा। देवभूतानामस्माकं समिन्धनं भवसि॥ २७॥

एजतु दशमास्यो गर्भो जरायुणा सह। यथायं वायुरेजति यथा समुद्र एजति। एवायं दशमास्यो अस्रज्जरायुणा सह॥ २८॥

इतः परमनुबन्ध्यायां गर्भिण्यां प्रायश्चित्तं कथ्यते॥

का० [ २५, १०, ७ ] निकृष्यमाणमभिमन्त्रयत एजतु दशमास्य इति। यद्यनूबन्ध्या वशा गर्भिणी स्यात्तदा विशसने मातुः सकाशात् पृथक् क्रियमाणं गर्भमभिमन्त्रयेत। अवसानत्रययुक्ता गर्भदेवत्या महापङ्क्तिः अष्टाक्षराः षट् पादा यस्याः सा महापङ्क्तिः। गर्भः जरायुणा सह एजतु। एजृ कम्पने। जरायुगर्भवेष्टनं तेन सह कम्पतां चलतु। किम्भूतो गर्भः दशमास्यः दश मासा जाता यस्य सः दशमासकालावच्छिन्न इव चलत्वित्यर्थः। कथं चलतु तत्राह यथा येन प्रकारेणायं वायुरेजति चलति यथा च समुद्र एजति एतौ हि सदा कम्पनशीलौ। एवेति निपात एवमर्थे एवमयं दशमास्यः सम्पूर्णावयवो गर्भो जरायुणा सह अस्रत् स्रंसताम् निर्गच्छतु यद्यप्ययं गर्भो दशमास्यो नास्ति तथापि सम्पूर्णस्येव निर्गमनमाशास्यते। तमेतदप्यदशमास्यं सन्तं ब्रह्मणैव यजुषा दशमास्यं करोतीति श्रुतेः [ ४, ५, २, ४ ]। स्रंस अधःपतने व्यत्ययेन परस्मैपदे शपो लुकि च कृते हल्ङ्याब्भ्य इति [ पा० ६, १. ६८ ] तिपि लुप्ते वावसान इति [ पा०

८, ४, ५६ ] सस्य दत्वे अनिदितामिति [ पा० ६, ४, २४ ] नलोपे अडागमे च असदिति रूपम् ॥ २८ ॥

यस्यै॑ ते य॒ज्ञियो॒ गर्भो॒ यस्यै॒ योनि॑र्हिर॒ण्ययी॑ । अङ्गा॒न्यह्रु॑ता॒ यस्य॒ तं मा॒त्रा सम॑जीगम॒ꣳ स्वाहा॑ ॥ २९ ॥

का० [ २५, १०, ११ ] अवदानान्यनुजुहोति यस्यै त इति । वशावदानानि हुत्वा गर्भरसं जुहुयात् ॥ वशादेवत्यानुष्टुप् हे वशे ! यस्यास्ते तव गर्भो यज्ञियः यज्ञार्हः यस्यै यस्याश्च तव योनिर्हिरण्ययी सुवर्णमयी ऋत्व्यवास्त्वेत्यादिना [ पा० ६, ४, १७५ ] इति निपातः सुवर्णमयी ... क्रियत इत्यर्थः । तादृशीं त्वां गर्भेण सङ्गमयामीति शेषः । यस्य गर्भस्याङ्गान्यह्रुता । ह्रु कौटिल्ये ह्रु ह्वरेश्छन्दसीति [ पा० ७, २, ३१ ] ह्र्वादेशो निष्ठायामकुटिलानि अखण्डितानि तं गर्भं मात्रा जनन्यानुबन्ध्या-लक्षणया समजीगमं सङ्गमयामि । गमेर्ण्यन्तस्य लुङि चङि रूपम् स्वाहेति होमार्थः ॥ २९ ॥

पु॒रु॒द॒स्मो विषु॑रूप॒ इन्दु॑र॒न्तर्म॑हि॒मान॑मान॒ञ्ज धीर॑: । एक॑पदीं द्वि॒पदीं॑ त्रि॒पदी॒ञ्चतु॑ष्पदीम॒ष्टाप॑दीं॒ भुव॒नानु॑ प्रथन्ता॒ꣳ स्वाहा॑ ॥ ३० ॥

का० [ २५, १०, १५ ] स्विष्टकृतमनुजुहोति पुरुदस्म इति । प्रचरण्यां स्रुचि प्रतिप्रस्थाता मध्ये गर्भरसमवदायाध्वर्युणा स्विष्टकृद्धोमे कृते सति जुहुयात् ॥ गर्भदेवत्यं यजुः इन्दुरूपेण गर्भः स्तूयते । इन्दुः क्लेदनरूपः सोमसदृशो गर्भो महिमानं महत्त्वमानञ्ज व्यक्तीकरोतु । अव्यक्तस्य व्यक्तीकरणार्थस्य

लिटि रूपम् तस्मान्नुड्द्विहल इति [पा० ७, ४, ७१] नुडागमः। विशेषणैर्महिमानमाह कीदृश इन्दुः पुरुदस्मः पुरु दस्म यस्य बहुदानयुक्तः विषुरूपः बहुरूपः अन्तरुदरे स्थितः धीरो मेधावी एवम्भूतं महिमानमानञ्जेत्यर्थः। एवं महिमवतो गर्भस्य मातरमनुवश्यां भुवना भुवनानि भूतजातानि अनु प्रयन्तां प्रख्यातां कुर्वन्तु। विशेषणैः प्रख्यातिमाह कीदृशीम् एकपदीमेकं पदं यस्यास्तां वपयैकपदयुताम् द्विपदीं वपया अङ्गैश्च द्विपदयुताम् त्रिपदीं त्रीणि पदानि यस्यास्तामुपयड्ढामैस्त्रिपदीम् चतुष्पदीं पत्नीसंयाजैश्चतुर्भिः पादैर्वा चतुःपादयुताम् अष्टापदीं स्वपादैर्गर्भपादैश्चाष्टपादयुताम् एवम्भूतां वशां गणयित्वा भूतान्यनुप्रयन्तामिति सम्बन्धः। स्वाहा सुहुतमस्तु ॥ ३० ॥

मरु॑तो॒ यस्य॒ हि क्षये॑ पा॒था दि॒वो वि॑म-
हसः। स सु॑गो॒पात॑मो॒ जनः॑ ॥ ३१ ॥

का० [२५, १०, १८] समिष्टयजुरन्ते शामित्र एव जुहुयात्तिष्ठन्मरुत इत्यस्वाहाकृत्येति। समिष्टयजुर्होमान्ते शामित्राग्नावेव स्वाहान्तेन मन्त्रेण गोणीपवेष्टितं गर्भं जुहोति मन्त्रान्ते स्वाहाकारमनुच्चार्य्य जुहुयादित्यर्थः॥ मरुद्देवत्या गायत्री गोतमदृष्टा। हे दिवो विमहसः विशिष्टं महो येषां ते द्युलोकसम्बन्धिना विशिष्टेन महसा तेजसा युक्ता यद्वा विशिष्टं महन्ति पूजयन्ति ते विमहसः द्युलोकस्य पूजयितारो हे मरुतः! यस्य यजमानस्य क्षये यज्ञगृहे यूयं पाथ सोमपानं कुरुथ पा पाने शपो लुक् पिबादेशाभावश्च छान्दसः संहितायां दीर्घः द्व्यचोऽतस्तिङ इति [पा० ६, ३, १३५] सूत्रेण। हि निश्चितं स जनः यजमानाख्यः सुगोपातमः

गोपायतीति गोपा रक्षकः अत्यन्तं शोभनो गोपा यस्य स सुगोपातमः युष्मद्रक्षितानां भयं नास्तीत्यर्थः ॥ ३१ ॥

मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम्। पिपृतां नो भरीमभिः ॥ ३२ ॥

का० [ २५, १०, १८ ] मही द्यौरित्यङ्गारैरभ्यूहतीति। शामित्रे क्षिप्तं गर्भमङ्गारैश्छादयेत् ॥ द्यावापृथिवीदेवत्या गायत्री मेधातिथिदृष्टा ॥ मही महती द्यौः द्युलोकः पृथिवी भूलोकश्च नोऽस्माकमिमं यज्ञं मिमिक्षताम्। मिह सेचने सनन्तः सेक्तुमिच्छतां स्वैः-स्वैर्भागैः पूरयतामित्यर्थः। भरीमभिः भरणैर्हिरण्यपशुधान्यादिभिः स्वैः-स्वैर्भागैर्नोऽस्मदीयं गृहं पिपृतां पूरयताम् ॥ ३२ ॥

इत्यग्निष्टोममन्त्राः समाप्ताः ॥

आ तिष्ठ वृत्रहन्रथं युक्ता ते ब्रह्मणा हरी। अर्वाचीनꣳ सु ते मनो ग्रावा कृणोतु वग्नुना ॥ उपयामगृहीतोऽसीन्द्राय त्वा षोडशिने। एष ते योनिरिन्द्राय त्वा षोडशिने ॥ ३३ ॥

अथ षोडशी भवने पवस्वेत्यस्मात्प्राक् [ ३७ क० ] ॥ का० [ १२, ५, २ ] प्रातःसवनेऽतिग्राह्यान् गृहीत्वा षोडशिनं खादिरेण चतुःस्रक्तिनातिष्ठ युक्ष्वा हीति वेति। प्रातःसवने आग्रयणग्रहणानन्तरमाग्नेयमतिग्राह्यमादाय चतुःकोणेन खादिरोलूखलेनातिष्ठ युक्ष्वा हीति मन्त्रयोरन्यतरेण सोपयामेन षोडशिग्रहं गृह्णीयात् ॥ इन्द्रदेवत्यानुष्टुब्गोतमदृष्टा। हे वृत्रहन्निन्द्र! ते तव हरी हरितवर्णावश्वौ ब्रह्मणा वयोलक्षणेन इन्द्रागच्छेत्यादिमन्त्रेण युक्ता रथे संयुक्तौ अतस्त्वं

रथमातिष्ठ आरोह । इन्द्राह्वानं श्रुत्वास्मन्नियोजनकालः प्राप्त इति मत्वाश्वौ स्वयमेव रथे युञ्जाते इति युक्ता इत्युक्तम् । किञ्च ग्रावा सोमाभिषवपाषाणः ते तव रथारूढस्य मनोऽर्वाचीनमस्मदयज्ञाभिमुखं सु कृणोतु सुतरां करोतु केन वग्नुना । वग्नुरिति वाङ्नामसु [ निघ० १, ११, २५ ] पठितम् । वाचा श्रवणीयेन सोमाभिषवशब्देन ॥ हे सोम ! त्वमुपयामेन गृहीतोऽसि षोडशिने षोडशं स्तोत्रमस्यास्तीति षोडशी तस्मै इन्द्राय त्वा त्वां गृह्णामीति शेषः ॥ सादयति हे ग्रह ! एष ते योनिः स्थानं षोडशिन इन्द्राय त्वां सादयामीति शेषः ॥ ३३ ॥

युक्ष्वा हि केशिना हरी वृषणा कक्ष्यप्रा । अथा न इन्द्र सोमपा गिरामुपश्रुतिं चर । उपयामगृहीतोऽसीन्द्राय त्वा षोडशिने । एष ते योनिरिन्द्राय त्वा षोडशिने ॥ ३४ ॥

द्वितीयो ग्रहणमन्त्रः । इन्द्रदेवत्यानुष्टुब्मधुच्छन्दोदृष्टा । हे इन्द्र ! हि निश्चितं हरी हरितवर्णौ त्वदीयावश्वौ युक्ष्वा रथेन संयोजय कीदृशौ हरी केशिना प्रलम्बकेसरौ तथा वृषणा । वृष सेचने । वृषणौ वर्षितारौ सेक्तारौ तरुणौ वा । अपूर्वस्य निगम इति [ पा० ६, ४, ९ ] दीर्घाभावः तथा कक्ष्यप्रा कक्षे भवः कक्ष्यः अश्वसन्नाहरज्जुः कक्ष्यं मध्यबन्धनं प्रातः पूरयतस्तौ कक्ष्यप्रौ स्थूलावयवावित्यर्थः । अथानन्तरं रथारोहणानन्तरं हे इन्द्र ! सोमपाः सोमपानं कुर्वन्नोऽस्मदीयानां गिरामृग्यजुःसामलक्षणानां वाचामुपश्रुतिमुपश्रवणं चर गच्छ प्राप्नुहि अस्मद्गिरः शृण्वित्यर्थः ।

वाचं श्रुत्वास्मद्ग्रहमागच्छेत्यर्थः। उपयाम एष ते एतं व्याख्याते। अथेत्यत्र संहितायां दीर्घः ॥ ३४ ॥

इन्द्रमिद्धरी वहतोऽप्रतिधृष्टशवसम्। ऋषीणां च स्तुतीरुप यज्ञं च मानुषाणाम्। उपयामगृहीतोऽसीन्द्राय त्वा षोडशिने। एष ते योनिरिन्द्राय त्वा षोडशिने ॥ ३५ ॥

षोडशिग्रहे तृतीयो मन्त्रविकल्पः आग्रयणादिन्द्रमिद्धरी इति गृहीत्वेति कठसूत्रोक्तेः इन्द्रदेवत्यानुष्टुब्गोतमदृष्टा। इत् एवार्थे हरी हरितवर्णावश्वौ ऋषीणां स्तुतीरुप वसिष्ठादीनां मुनीनां स्तुतिसमीप इन्द्रमित् इन्द्रमेव वहतः प्रापयतः। च पुनः मानुषाणां यजमानानां यज्ञमुप यज्ञसमीपे च हरी इन्द्रं वहतः। किम्भूतमिन्द्रम् अप्रतिधृष्टशवसम् प्रतिधर्षयितुं परा भवितुं शक्यं प्रतिधृष्टं न प्रतिधृष्टमप्रतिधृष्टं शवो बलं यस्य सोऽप्रतिधृष्टशवास्तम्॥ उपयाम एष ते इति व्याख्याते ॥ ३५ ॥

यस्मान्न जातः परो अन्यो अस्ति य आविवेश भुवनानि विश्वा। प्रजापतिः प्रजया सꣳरराणस्त्रीणि ज्योतीꣳषि सचते स षोडशी ॥ ३६ ॥

का० [ १२, ५, १८ ] उपस्थायैनं यस्मान्न जात इति। षोडशिग्रहमुपतिष्ठेत्। इन्द्रदेवत्या त्रिष्टुप् विवस्वद्दृष्टा। परब्रह्मरूपेण षोडशी स्तूयते यस्मात् पुरुषादन्यः व्यतिरिक्तः परः उत्कृष्टो देवादिर्जातः सम्भूतो नास्ति न विद्यते यश्च विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि आविवेश

अन्तर्यामिरूपेण प्रविष्टवान् सः प्रजापति स्त्रोत्पन्नप्रजापालक-स्त्रीणि ज्योतींषि अग्निवायुसूर्य्यलक्षणानि तेजांसि विषयप्रका-पकानि सचते सेवते स्वतेजसा तज्ज्योतिषामुज्जीवनं करोती-त्यर्थः। येन सूर्य्यस्तपति तेजसेद्ध इत्यादिश्रुतेः। यदादित्यगतं तेजो जगद्भासयतेऽखिलम्। यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकमिति स्मृतेश्च [ भग० गी० १५, १२ ] किम्भूतः प्रजापतिः प्रजया संरराणः प्रजारूपेण सम्यग्रममाणः। तथा षोडशी षोडशकलात्मकलिङ्गशरीरोपहितः स एव सर्वव्यवहाराश्रय इत्यर्थः यः सर्वेषु भूतेषु तिष्ठन्नित्यादिश्रुतेः ॥ ३६ ॥

इन्द्रश्च सम्राड्वरुणश्च राजा तौ ते भक्षं चक्रतुरग्र एतम्। तयोरहमनु भक्षं भक्षयामि वाग्देवी जुषाणा सोमस्य तृप्यतु। सह प्राणेन स्वाहा ॥ ३७ ॥

का० इन्द्रश्च सम्राडिति भक्षणमिति। षोडशिग्रहं भक्ष येत् ॥ इन्द्रवरुणदेवत्या षाडशिदेवत्या वा त्रिष्टुब्यजुरन्ता अन्त्यपादौ द्वादशार्णौ सह प्राणेनेति यजुः विवस्वदृष्टा। हे षोडशिग्रह ! तौ देवौ इन्द्रावरुणौ ते तव एतं सोममग्रे प्रथमं भक्षं चक्रतुः। तौ कौ इन्द्रो वरुणश्च चकारौ समुच्चये किम्भूत इन्द्रः सम्राट् परमैश्वर्य्ययुक्तः वाजपेययाजीत्यर्थः। किम्भूतो वरुणः राजा राजसूययाजी राजा वै राजसूयेनेष्ट्वा भवति सम्राड्वाजपेयेनेति श्रुतेः [ ५, १, १, १३ ]। तयोरिन्द्रा-वरुणयोः सम्बन्धिनं भक्षमनु पश्चात् अहम् भक्षयामि सोमं पिबामि। जुषाणा मदीयेन भक्षेण सेवमाना वाग्देवी श्रुतिमुपेअपणेन प्राणदेवतया सह सोमस्य तृप्यतु सोमेन तृप्ता

भवतु तृप्त्यर्थानां करणे षष्ठी वेति सोमशब्दात् षष्ठी । स्वाहा सुहुतमस्तु ॥ ३७ ॥

इति षोडशियागः सम्पूर्णः ॥

अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्य्यम् । दधद्रयिं मयि पोषम् ॥ उपयामगृहीतोऽस्यग्नये त्वा वर्चसे । एष ते योनिरग्नये त्वा वर्चसे । अग्ने वर्चस्विन्वर्चस्वांस्त्वं देवेष्वसि वर्चस्वानहं मनुष्येषु भूयासम् ॥ ३८ ॥

अथ द्वादशाहमन्त्राः ॥ का० [ १२, ३, १—२ ] पृष्ठ्यः षडहस्तत्रातिग्राह्यग्रहणं त्र्यहे पूर्वेऽग्ने पवस्वोत्तिष्ठन्नदृश्रमित्यन्वहमेकैकम् [ ६ का० ] अग्ने वर्चस्विन्निन्द्रौजिष्ठ सूर्य भ्राजिष्ठेति भक्षणं यजमानैरिति । अस्ति कश्चित् पृष्ठ्यः षडहाख्यः क्रतुः स तु षड्भिरहोभिर्निष्पाद्यः तत्र पूर्वस्मिन्नहस्त्रये क्रमेणाग्ने पवस्वेत्यादिभिर्मन्त्रैरतिग्राह्यान् ग्रहान् गृह्णीयात्तथैवाग्ने वर्चस्विन्नित्यादिभिर्मन्त्रैस्तत्तद्ग्रहशेषं भक्षयेत् ॥ तत्र प्रथमो यथा । अग्ने पवस्व । अग्निदेवत्या गायत्री वैखानसदृष्टा आद्यौ सप्तार्णौ पादौ एषा यजुरन्ता उपयाम एष त इति द्वे यजुषी । हे अग्ने ! त्वमस्मे अस्मासु सुवीर्य्यं शोभनं वीर्य्यं यस्मिंस्तादृशं शोभनसामर्थ्यार्पितं वर्चो ब्रह्मवर्चसं पवस्व पव गत्यर्थः अन्तर्भूतण्यर्थः गमय प्रापय । सुपां सुलुगिति [ पा० ७, १, ३९ ] विभक्तेः शेआदेशे अस्मे इति रूपम् । किम्भूतस्त्वं स्वपाः । अप इति कर्मनाम [ निघ २, १, १ ] शोभनान्यपांसि यस्य स स्वपाः सुकर्मा । एवमृत्विग्भिः सह संप्रार्थ्य स्वयं याचते मयि यजमाने रयिं धनं दधत् धारयन्

स्थापयन् सन् पोषं पुष्टिं पुत्रपश्वादिवृद्धिं पवस्व प्रवर्तं सम्बन्धः॥ उपयामगृहीतेत्युपयामो ग्रहः हे सोम! तेन गृहीतोऽसि हे ग्रह! वर्चसे वर्चस्विने तेजस्विनेऽग्नये त्वा गृह्णामीति शेषः। सादयति एष खरप्रदेशस्तव योनिः स्था वर्चस्विनेऽग्नये त्वां सादयामीति शेषः। भक्षणमन्त्रः। वर्चस्विन् विशिष्टतेजोयुक्त! हे अग्ने! त्वं देवेषु इन्द्रादिषु मध्ये वर्चस्वानतिदीप्तिमानसि अतस्त्वत्प्रसादादहमपि मनुष्येषु मध्ये वर्चस्वान् ब्रह्मवर्चससम्पन्नो भूयासं भवेयम्॥ ३८॥

उत्तिष्ठन्नोजसा सह पीत्वी शिप्रे अवेपयः। सोममिन्द्र चमूसुतम्। उपयामगृहीतोऽसीन्द्राय त्वौजसे। एष ते योनिरिन्द्राय त्वौजसे। इन्द्रौजिष्ठौजिष्ठस्त्वं देवेष्वस्योजिष्ठोऽहं मनुष्येषु भूयासम्॥ ३९॥

द्वितीयोऽतिग्राह्यग्रहणमन्त्रः। इन्द्रदेवत्या गायत्री कुरुसुतिदृष्टा यजुरन्ता। हे इन्द्र! त्वमोजसा बलेन सह उत्तिष्ठन् सङ्गादुत्तिष्ठन् सन् शिप्रे हनूनासिके वा अवेपयः टुवेपृ कम्पने कम्पितवानसि किं कृत्वा सोमं पीत्वी पीत्वा स्नात्व्यादयश्चेति [ पा० ७, १ ४९ ] निपातः। किम्भूतं सोमं चमूसुतं चम्वामधिषवणचर्मणि सुतमभिषुतम् सोमपानं कृत्वातिहर्षवशात्त्वासे कम्पितवानित्यर्थः॥ हे ग्रह! त्वमुपयामगृहीतोऽसि ओजसे बलवते इन्द्राय त्वां गृह्णामि। सादयति एष ते योनिः ओजस इन्द्राय सादयामि॥ भक्षणमन्त्रः। हे इन्द्र! हे ओजिष्ठ! ओजो बलमस्यास्तीत्योजस्वी। अस्मायेत्यादिना [ पा० ५, २, १२१ ] विनिप्रत्ययः अत्यन्तमोजस्वी ओजिष्ठः

ति । अतिशायने तमबिष्ठनाविति [ पा० ५, ३, ५५ ] इष्ठन्प्रत्यय:। विन्मतोर्लुगिति [पा० ५, ३, ६५] इष्ठनि परे विनिलोप: टिलोपश्च तत्सम्बोधनमोजिष्ठ अतिबलयुक्त। त्वं यथा देवेष्वोजिष्ठोऽसि एवं मनुष्येषु मध्येऽहमोजिष्ठोऽतिबलो भूयासम् ॥ ३८ ॥

अदृश्रमस्य केतवो वि रश्मयो जनाँ२॥ अनु। भ्राजन्तो अग्नयो यथा। उपयामगृहीतोऽसि सूर्याय त्वा भ्राजाय। एष ते योनिः सूर्याय त्वा भ्राजाय। सूर्य भ्राजिष्ठ भ्राजिष्ठस्त्वं देवेष्वसि भ्राजिष्ठोऽहं मनुष्येषु भूयासम् ॥४०॥

तृतीयोऽतिग्राह्यमन्त्र:। सूर्यदेवत्या गायत्री प्रस्कण्वदृष्टा यजुरन्ता। दृशेर्लुङि इरितो वेति [ पा० ३, १, ५७ ] च्लेरङादेशे ऋदृशोऽङि गुण इति [ पा० २, ४, १६ ] उत्तमैकवचने अदर्शमिति प्राप्ते प्राङ्ख रुडूत्तेर्विभाषा बहुलं छन्दसीति [ पा० ७, १, ६—८ ] दृशेरुत्तरस्य मिवादेशस्यामो रुडागमो धातोर्गुणाभावश्छान्दस: अदृश्रमिति रूपम् कर्मणि लङि प्रथमपुरुषबहुवचनस्थाने द्रष्टव्यमदृश्यन्तेत्यर्थ:। वीत्युपसर्गोऽदृश्रमित्यनेन सम्बध्यते। केतुरिति प्रज्ञानामसु [ निघ० ३, ९, १ ] पठितम्। अस्य सूर्यस्य केतव: प्रज्ञापकास्तव: सर्वपदार्थज्ञानकृतो रश्मय: किरणा जनाननु सर्वप्राणिनोऽनुगता वि अदृश्रम् विशेषेणादृश्यन्त सूर्यकरा: सर्वजनानुगता व्यापका दृश्यन्त इत्यर्थ:। तत्र दृष्टान्त: भ्राजन्ता ज्वलन्तोऽग्नयो वह्नयो यथा जनानुगता दृश्यन्ते तद्वत्। हे ग्रह ! त्वमुपयामेन गृहीतोऽसि भ्राजते दीप्यतेऽसौ भ्राजस्तस्मै

सूर्य्याय त्वा गृह्णामि। सादयति एष तव योनिः भ्राजाय दीप्ताय सूर्य्याय त्वां सादयामि॥ तृतीयातिग्राह्यभक्षणमन्त्रः। अत्यन्तं भ्राजो भ्राजिष्ठः हे भ्राजिष्ठ अतिदीप्त हे सूर्य्य! त्वं यथा देवेषु भ्राजिष्ठोऽसि तथाहमपि मनुष्येषु भ्राजिष्ठोऽति दीप्तिमान् भूयासम्॥ ४०॥

इति द्वादशाहः सम्पूर्णः॥

उदु त्यं जातवेदसं देवं वहन्ति केतवः। दृशे विश्वाय सूर्य्यम्। उपयामगृहीतोऽसि सूर्य्याय त्वा भ्राजाय। एष ते योनिः सूर्य्याय त्वा भ्राजाय॥ ४१॥

का० [ १३, २, ११ ] उदु त्यमिति ग्रहग्रहणमिति। गवामयनाख्यस्य संवत्सरसत्रस्य विषुवन्नामके मध्यमेऽहनि सौर्य-पशूपालम्भादूर्ध्वमतिग्राह्यग्रहणं कार्य्यम्॥ सौरी गायत्री देवदृष्टा पुनर्व्याख्यायते [ ७ अध्या० ४१ क० ] त्यं तं प्रसिद्धं जातवेदसं जातानां प्रजानां ज्ञातारं जातप्रज्ञं वा देवं देवनशीलं सूर्य्यं केतवः प्रज्ञापकेतवः किरणा उ आशु उद्वहन्ति उदयाचलादुन्नमयन्ति। किमर्थं विश्वाय। षष्ठ्यर्थे चतुर्थी। विश्वस्य दृशे दर्शनाय सर्वं जगद्द्रष्टुमित्यर्थः। उपयाम एष ते व्याख्याते॥ ४१॥

आजिघ्र कलशं मह्या त्वा विशन्त्विन्दवः। पुनरूर्जा निवर्त्तस्व सा नः सहस्रं धुक्ष्वोरुधारा पयस्वती पुनर्माविशताद्रयिः॥ ४२॥

का० [ १३, ४, १९ ] हविर्धानाग्न्योरन्तरे द्रोणकलशमेनामाघ्रापयत्याजिघ्रेति। गर्गत्रिरात्रादावहीने विसृष्टे

गोसहस्रं दक्षिणास्ति तत्र सहस्रसंख्यापूरणी रोहिणी धेनुस्तां हविर्धानाग्नीध्रयोर्मध्यस्थां द्रोणकलशमाघ्रापयेत् ॥ गोदेवत्या महापङ्क्तिः कुसुरुविन्दुदृष्टा अष्टार्णषट्पादा मह्येति गोनाम [ निघ० २, ११, ५ ]। हे महि ! हे धेनो ! त्वं कलशं द्रोणकलशाख्यं पात्रमाजिघ्र आभिमुख्येन घ्राणं कुरु। किञ्च हे धेनो ! इन्दवः सोमाः त्वा त्वामाविशन्तु द्रोणकलशस्थाः सोमास्त्वां प्रविशन्तु। किञ्च ऊर्जा विशिष्टरसेन पयोभूतेन सह पुनः अस्मान् प्रति निवर्त्तस्व। या त्वमेवं मया भुक्ता सा त्वं नोऽस्माकं सहस्रं धुक्ष्व सहस्रसङ्ख्यं धनं देहि यद्वा गवां सहस्रं यदस्माभिर्दत्तं तन्नोऽस्मभ्यं धुक्ष्व पुनर्देहि दुहति-र्दानार्थः। किञ्च त्वत्प्रसादादुरुधारा बहुपयोयुक्ता पयस्वती धेनुर्मा मां पुनराविशतात् आगच्छत्वित्यर्थः। तथा रयिः धन-मपि मा मामाविशतात् ॥ ४२ ॥

इडे रन्ते हव्ये काम्ये चन्द्रे ज्योतेऽदिते सरस्वति महि विश्रुति। एता ते अघ्न्ये नामानि देवेभ्यो मा सुकृतं ब्रूतात् ॥ ४३ ॥

का० [ १३, ४, २० ] इडे रन्त इति दक्षिणेऽस्याः कर्णे यजमानो जपतीति। पूर्वोक्ताया धेनोर्दक्षिणकर्णे यजमानो जपेत् ॥ गोदेवत्या प्रस्तारपङ्क्तिः कुसुरुविन्दुदृष्टा यस्या आद्यौ पादौ द्वादशार्णौ अन्त्यावष्टार्णौ सा प्रस्तारपङ्क्तिः। इड्यते स्तूयते इति इडा मनोर्दुहिता तत्तुल्या। रमयतीति रन्ता। हूयते यद्दुग्धं यज्ञेष्विति हव्या हूयते आहूयते सर्वैरिति वा हव्या। काम्यत इति काम्या मनुष्याणाꣳ ह्येताश्च कामाः प्रविष्टा इति श्रुतेः। चन्दयत्याह्लादयतीति चन्द्रा। द्युत दीप्तौ द्योत-यति प्रकाशयतीति ज्योता दकारस्य जः। अदितिरदीनान-

वच्छिन्ना। सरस्वती सरतीति सरः क्षीरं तद्वती सर इत्यु दकनाम। सर्तेरिति [ निरु० ८, २६ ] यास्कोक्तेः। उदक-शब्देनात्र क्षीरमुच्यते। मही महती। विविधं श्रूयते स्तूयत इति विश्रुतिः। न हन्तुं योग्या अघ्न्या अहन्तव्या। तासां सम्बोधनानि हे धेनो! एवम्भूते ते तव एता एतानि अतिशयगुणयुक्तानि नामानि एतैर्नामभिरभिहिता सती देवेभ्यः सुकृतं सुष्ठु करोतीति सुकृत् तं सुकृतं शोभनकर्म-कारिणं मां त्वं ब्रूतात् ब्रूहि वद अयं यजमानः पुण्यकर्तेति देवेभ्यो वदेत्यर्थः ॥ ४३ ॥

वि न॑ इन्द्र मृधो॑ जहि नी॒चा य॑च्छ पृत-न्य॒तः। ह्रो अ॒स्माँ २॥ अ॒भि॒दास॒त्यध॑रं गमया॒ तमः॑। उ॒प॒या॒मगृ॑हीतो॒ऽसीन्द्रा॑य त्वा वि॒मृध॑ । ए॒ष ते॒ योनि॒रिन्द्रा॑य त्वा वि॒मृध॑ ॥ ४४ ॥

का० [ १३, २, १७ ] ग्रहं गृह्णाति वि न इन्द्र वाचस्पतिं विश्वकर्माणमिति वेति। गवानयनस्यापाख्ये महाव्रतेऽहनि प्राजापत्यपशुपालम्भादूर्ध्वमैन्द्रग्रहग्रहणे मन्त्रद्वयम् ॥ तत्राद्यः इन्द्रदेवत्यानुष्टुप् शासदृष्टा। हे इन्द्र! नोऽस्माकं मृधः शत्रून् संग्रामान् वा विजहि विशेषेण नाशय। किञ्च पृतन्यतः नीचा यच्छ। पृतनां संग्रामं सेनां वा इच्छन्ति ते पृतन्यन्ति पृतन्यन्तीति पृतन्यन्तस्तान् सुप आत्मनः क्यजिति [ पा० ३, १, ८ ] पृतनाशब्दात् क्यचि प्रत्यये कव्यध्वरपृतनस्यर्चि लोप इति [ पा० ७, ४, ३९ ] टिलोपे शतृप्रत्यये च रूपम्। पृत-न्यतः सेनामिच्छतः शत्रून्नीचान् न्यग्भूतान् यच्छ निगृहाण युद्धादुपरतान् कुर्वित्यर्थः। किञ्च यश्चास्मोऽस्मानभिदासति।

टसु उपचये। उपचयति तं अवसमधमं निकृष्टं तमो नरकं गमय प्रापय संहितायां दीर्घः॥ हे ग्रह! त्वमुपयामेन गृहीतोऽसि विशिष्टो मृत् संग्रामो यस्य तस्मै विमृधे विशिष्ट-संग्रामवते इन्द्राय त्वां गृह्णामि। सादयति एष तव योनिः विमृद्गुणविशिष्टायेन्द्राय त्वां सादयामि॥ ४४॥

वाचस्पतिं विश्वकर्माणमूतये मनोजुवं वाजे अद्या हुवेम। स नो विश्वानि हवनानि जोषद्विश्वशम्भूरवसे साधुकर्मा॥ उपयामगृहीतोऽसीन्द्राय त्वा विश्वकर्मणे। एष ते योनिरिन्द्राय त्वा विश्वकर्मणे॥ ४५॥

अथ द्वितीयः। विश्वकर्मदेवता त्रिष्टुप् शासदृष्टा ईदृश-मिन्द्रं वाजे सङ्ग्रामनीयलक्षणान्नविषये अद्यास्मिन् दिने वयं हुवेम आह्वयाम किमर्थमूतये अवनाय रक्षणाय। किम्भूतं विश्वकर्माणं विश्वानि समस्तानि जगदुत्पत्त्यादीनि कर्माणि यस्य तम्। तथा वाचस्पतिं वाचां पालयितारं वाचोऽधिपतिं तस्माद्वाहुरिन्द्रो वागिति श्रुतेः। तथा मनोजुवं जुरिति जवनाम मनसा जूरिव जव इव जवो यस्य स मनोजूस्तम्। स ईदृश इन्द्रो नोऽस्माकं विश्वानि सर्वाणि हवनानि आह्वा-नानि अवसेऽस्मायामस्मद्रक्षणाय वा जोषत् जुषताम् अस्मदाह्वानं साधु साध्विति सेवताम्। लेटोऽडाटावित्य-डागमे [ पा० ३, ४, ९४ ] इतश्च लोपः परस्मैपदेष्विति [ पा० ३, ४, ९७ ] तिप इलोपे जोषदिति रूपम्। किम्भूतः सः विश्वशम्भूः विश्वस्य शं सुखं भवत्यस्मादिति विश्वशम्भूः साधुकर्मा शोभनकर्मकर्त्ता॥ हे ग्रह! उपयामगृहीतोऽसि विश्व-

वक्त्वभिहिता। सरस्वती सरतीति सरः क्षीरं तद्वती सर इत्यु दकनाम। सर्तेरिति [ निरु० ८, २६ ] यास्कोक्तेः। उदक- शब्देनात्र क्षीरमुच्यते। मही महती। विविधं श्रूयते स्तूयत इति विश्रुतिः। न हन्तुं योग्या अघ्न्या अहन्तव्या। तासां सम्बोधनानि हे धेनो! एवम्भूते ते तव एता एतानि अतिशयगुणयुक्तानि नामानि एतैर्नामभिरभिहिता सती देवेभ्यः सुकृतं सुष्ठु करोतीति सुकृत् तं सुकृतं शोभनकर्म- कारिणं मां त्वं ब्रूतात् ब्रूहि वद अयं यजमानः पुण्यकर्तेति देवेभ्यो वदेत्यर्थः॥ ४३॥

वि न॑ इन्द्र॒ मृधो॑ जहि नी॒चा य॑च्छ पृत- न्य॒तः। यो अ॒स्माँ २॥ अ॑भि॒दास॒त्यध॑रं गमया॒ तमः॑। उ॒प॒या॒मगृ॑हीतो॒ऽसीन्द्रा॑य त्वा वि॒मृध॑े। ए॒ष ते॒ योनि॒रिन्द्रा॑य त्वा वि॒मृध॑े॥ ४४॥

का० [ १३, २, १७ ] ग्रहं गृह्णाति वि न इन्द्र वाचस्पतिं विश्वकर्मन्निति वेति। गवानयनस्यापात्ये महाव्रतेऽहनि प्राजापत्यपशूपालम्भादूर्ध्वमैन्द्रग्रहग्रहणे मन्त्रद्वयम्॥ तत्राद्यः। इन्द्रदेवत्यानुष्टुप् शासदृष्टा। हे इन्द्र! नोऽस्माकं मृधः शत्रून् संग्रामान् वा विजहि विशेषेण नाशय। किञ्च पृतन्यतः नीचा यच्छ। पृतनां संग्रामं सेनां वा इच्छन्ति ते पृतन्यन्ति पृतन्यन्तीति पृतन्यन्तस्तान् सुप आत्मनः क्यजिति [ पा० ३, १, ८ ] पृतनाशब्दात् क्यचि प्रत्यये कव्यध्वरपृतनस्यर्चि लोप इति [ पा० ७, ४, ३९ ] टिलोपे शतृप्रत्यये च रूपम्। पृत- न्यतः सेनामिच्छतः शत्रून्नीचान् न्यग्भूतान् यच्छ नियच्छ युद्धादुपरतान् कुर्वित्यर्थः। किञ्च यश्चान्योऽस्मानभिदासति।

दस्यु उपक्षये। उपक्षयति तं अवगुणकर्त्तारं निकृष्टं तमो नरकं गमय प्रापय संहितायां दीर्घः॥ हे ग्रह! त्वमुपयामेन गृहीतोऽसि विशिष्टो मृत् संग्रामो यस्य तस्मै विमृधे विशिष्ट-संग्रामवते इन्द्राय त्वां गृह्णामि। सादयति एष तव योनिः विमृद्गुणविशिष्टायेन्द्राय त्वां सादयामि॥ ४४॥

वाचस्पतिं विश्वकर्माणमूतये मनोजुवं वाजे अद्या हुवेम। स नो विश्वानि हवनानि जोषद्विश्वशम्भूरवसे साधुकर्मा॥ उपयामगृहीतोऽसीन्द्राय त्वा विश्वकर्मणे। एष ते योनिरिन्द्राय त्वा विश्वकर्मणे॥ ४५॥

अथ द्वितीयः। विश्वकर्मदेवता त्रिष्टुप् शासदृष्टा ईदृश-मिन्द्रं वाजे सहावतीयलक्षणान्नविषये अद्यास्मिन् दिने वयं हुवेम आह्वयाम किमर्थमूतये अवनाय रक्षणाय। किम्भूतं विश्वकर्माणं विश्वानि समस्तानि जगदुत्पत्त्यादीनि कर्माणि यस्य तम्। तथा वाचस्पतिं वाचां पालयितारं वाचोऽधिपतिं तस्मादाहुरिन्द्रो वागिति श्रुतेः। तथा मनोजुवं जुरिति जवनाम मनसा जूरिव जव इव जवो यस्य स मनोजूस्तम्। स ईदृश इन्द्रो नोऽस्माकं विश्वानि सर्वाणि हवनानि आह्वा-नानि अवसेऽस्मायाम्नमस्मृद्धेः रक्षणाय वा जोषत् जुषताम् अस्मदाह्वानं साधु साध्विति सेवताम्। लेटोऽडाटावित्य-डागमे [ पा० ३, ४, ९४ ] इतश्च लोपः परस्मैपदेष्विति [ पा० ३, ४, ९७ ] तिप इलोपे जोषदिति रूपम्। किम्भूतः सः विश्वशम्भूः विश्वस्य शं सुखं भवत्यस्मादिति विश्वशम्भूः साधुकर्मा शोभनकर्मकर्त्ता॥ हे ग्रह! उपयामगृहीतोऽसि विश्व-

कर्मणे सर्वकर्त्रे इन्द्राय त्वां गृह्णामि। सादयति एष ते योनिः विश्वकर्मणे इन्द्राय त्वां सादयामि॥ ४५॥

विश्वकर्मन् हविषा वर्धनेन त्रातारमिन्द्र-मकृणोरवध्यम्। तस्मै विशः समनमन्त पूर्वी-रयमुग्रो विहव्यो यथासत्। उपयामगृहीतो-ऽसीन्द्राय त्वा विश्वकर्मणे। एष ते योनिरि-न्द्राय त्वा विश्वकर्मणे॥ ४६॥

तृतीयो मन्त्रविकल्पः। इन्द्रविश्वकर्मदेवत्या त्रिष्टुप् शास-दृष्टा। हे विश्वकर्मन्! वर्धनेन वर्धमानेन वर्धयित्रा वा हविषा त्वमिन्द्रं त्रातारं जगतो रक्षकमवध्यं हर मशक्य-मप्रतिभटं चाकृणोः कृतवानसि। तस्मै तादृशायेन्द्राय पूर्वीर्विशः प्रजाः पूर्वे वसिष्ठादयो मनुष्याः समनमन्त सम्यङ् नताः यथा पञ्चम्यर्थे थाल्प्रत्ययः यथा यतः कारणात् अय-मिन्द्रः उग्र उद्गूर्णवज्रो विहव्यो विविधेषु कार्येषु आहूयत इति विहव्यश्च असदभूत् तस्माद्विशस्तस्मै नता इत्यर्थः। विश्व-कर्मन्! त्वद्धविःसामर्थ्यादिन्द्रस्यायं प्रभाव इति भावः॥ उप-याम एष ते इति व्याख्याते॥ ४६॥

उपयामगृहीतोऽस्यग्नये त्वा गायत्रच्छ-न्दसं गृह्णामि। इन्द्राय त्वा त्रिष्टुप्छन्दसं गृह्णामि। विश्वेभ्यस्त्वा देवेभ्यो जगच्छन्दसं गृह्णामि। अनुष्टुप्तेऽभिगरः॥ ४७॥

का० [ १२, ५, १३—१५ ] अदाभ्यं गृह्णात्यांशुञ्च निग्राभ्याः पार्श्वे तस्मिंस्तूष्णीं त्रीनंशूनवधायाग्नये त्वा

गायत्रच्छन्दसमिति प्रतिमन्त्रमुपयामः सर्वत्राविशेषादिति । यस्मिन्नौदुम्बरे पात्रे अंशुग्रहो गृहीतस्तस्मिन् होतृचमसस्था निग्राभ्यामंत्रा अप आनीय तस्मिंस्त्रिस्त्रः सोमलताः प्रक्षिप्याग्नये त्वेत्यादिभिस्त्रिभिर्मन्त्रैः क्रमेणादाभ्यं ग्रहं गृह्णाति मन्त्रैः । सोमलताप्रक्षेपो वेति केचित् उपयामगृहीतोऽसीत्येतत्त्रिष्वपि मन्त्रेष्वादावनुषज्जनयं सर्वशेषत्वादाम्नानस्येति सूत्रार्थः ॥ तत्र प्रथमो मन्त्रः । अदाभ्यदेवत्यानि त्रीणि यजूंषि देवदृष्टानि । हे सोम ! त्वमुपयामेन ग्रहेण गृहीतोऽसि । हे ग्रह ! गायत्री छन्दो यस्य ग्रहस्य तं गायत्रीच्छन्दस त्वामग्नयेऽग्निप्रीत्यर्थं गृह्णामि ॥ द्वितीयो मन्त्रः । उपयामेन गृहीतोऽसि हे ग्रह ! त्रिष्टुप् छन्दो यस्य तादृशं त्वामिन्द्राय गृह्णामि ॥ तृतीयो मन्त्रः । उपयाम० जगती छन्दो यस्य तादृशं त्वां हे ग्रह ! विश्वेभ्यो देवेभ्योऽर्थाय गृह्णामि । एवं सवनदेवताभ्यो वारत्रयं ग्रहणम् ॥ का० [ १२, ५, १७ ] अनुष्टुप इत्युक्तेति ! एनं मन्त्रं पठेत् । अदाभ्यदेवत्यं देवदृष्टम् । एवं स्वच्छन्दसं सोमं गृहीत्वाग्र तमाह हे सोम ! अनुष्टुप् छन्दस्ते तवाभिगरः अभिष्टव इत्यर्थः । गृ श्रुतौ यद्वा ऊर्ध्वꣳ सवनेभ्यस्तदानुष्टुभमिति श्रुतेः [ ११, ५, ८, ७ ] ॥ ४७ ॥

व्रेशीनां त्वा पत्मन्नाधूनोमि कुकूननानां त्वा पत्मन्नाधूनोमि भन्दनानां त्वा पत्मन्नाधूनोमि मदिन्तमानां त्वा पत्मन्नाधूनोमि मधुन्तमानां त्वा पत्मन्नाधूनोमि शुक्रं त्वा शुक्र आधूनोम्यह्नो रूपे सूर्य्यस्य रश्मिषु ॥ ४८ ॥

का० [ १२ ५, १७ ] धुनोत्यंशुभिर्व्रेशीनां त्वेति गच्छ-

आहवनीयमिति । आहवनीयसमीपं गच्छन्नंशुभिरदाभ्यग्रहस्थानि जलानि चालयेत् ॥ एतदादीनि विश्वेषां देवानामित्यन्तानि [ ५०, क० ] सोमदेवत्यानि देवदृष्टानि । हे सोम ! व्रेशीनाम् व्रजतो मेघस्योदरे शेरते ता व्रेश्यो मेघोदरस्था आपस्तासां पत्मन् पतने निमित्ते वृष्टिनिष्पत्त्यर्थं त्वा त्वामाधूनोमि कम्पयामि । कुकूननानाम् । कूङ् शब्दे अत्यर्थं कुर्वन्त्यः शब्दं कुर्वाणा नमन्ति प्रह्वीभवन्तीति कुकूननाः मेघस्था आपस्तासां पतने त्वां कम्पयामि । भन्दनानाम् । भदि कल्याणे सुखे च भन्दन्तीति भन्दनाः कल्याणकारिण्यः सुखयित्र्यो वा मेघ्या आपः अन्यत्पूर्ववत् । मदिन्तमानाम् मादयन्तीति मदिन्यः अत्यर्थं मदिन्यो मदिन्तमाः तमपि पुंवद्भावः नलोपः प्रातिपदिकान्तस्येति [ पा० ८, २, ७ ] नलोपः नाद्घस्येति [ पा० ८, २ १७ ] छान्दसो नुडागमः । अत्यन्तं तर्पयन्त्यो मेघ्या आपः । मधुन्तमानाम् अत्यन्तमधुस्वादोपेता मधुन्तमाः एवंविधानामपां पतने त्वां धूनोमि । किञ्च शुक्रं शुद्धमक्लिष्टकर्माणं त्वां शुक्रे शुद्धे अक्लिष्टकर्मणि निग्राम्यालक्षणे जले त्वामाधूनोमि । किञ्च अह्नः दिवसस्य रूपे सूर्यस्य रश्मिषु हे सोम ! त्वामाधूनोमि ॥ ४८ ॥

क॒कु॒भꣳ रू॒पं वृ॑ष॒भस्य॑ रोचते बृ॒हच्छु॒क्रः शु॒क्रस्य॑ पुरो॒गाः सोम॑ः सोम॑स्य पुरो॒गाः । यत्ते॑ सोमादा॑भ्यं॒ नाम॒ जागृ॑वि॒ तस्मै॑ त्वा गृह्णामि ॥ तस्मै॑ ते सोम॒ सोमा॑य॒ स्वाहा॑ ॥ ४९ ॥

हे सोम ! वृषभस्य श्रेष्ठस्य तव ककुभं महत् आदित्य

नक्षत्रं रूपं रोचते दीप्यते ककुभमिति महन्नामसु पठितम् [ निघ० ३, ३, १९ ] बृहत् महान् शुक्रः शुद्ध आदित्यः शुक्रस्य शुद्धस्य सोमस्य तव पुरोगाः पुरोगामी । सोम एव सोमस्य पुरोगाः पुरोगामो भवितुमर्हति । हे सोम ! ते त्वदीय मदाभ्यमनुपहिंसितं जागृवि जागरणशीलं यन्नामास्ति तस्मै त्वां गृह्णामि ॥ का० [ १२, ५, १७, ] तस्मै ते इति जुहोतीति । अदाभ्यं जुहोति । सोमाम् हे सोम ! तस्मै ताट्टशाय ते तुभ्यं स्वाहा सुहुतमस्तु तत्सोममेवैतत्सोमाय जुहोतीति श्रुतेः [ ११, ५, ८, ११ ] ॥ ४९ ॥

उ॒शिक्त्वं दे॑व सोमा॒ग्नेः प्रि॒यं पाथोऽपी॑हि ।
व॒शी त्वं दे॑व सोमेन्द्र॑स्य प्रि॒यं पाथोऽपी॑हि ।
अ॒स्मत्स॑खा॒ त्वं दे॑व सोम॒ विश्वे॑षां दे॒वानां प्रि॒यं पाथोऽपी॑हि ॥ ५० ॥

का० [ १२,५, १८ ] अल्पान् सोमे निदधात्युशिक्त्वमिति प्रति मन्त्रमिति मन्त्रत्रयेणाल्पानल्पानंशून् सोमे क्षिपेत । सताभ्यः । हे देव । दीप्यमान हे सोम । उशिक कामयमानस्त्वमग्नेः प्रियं पाथोऽन्नमपीहि अभिगच्छ ॥ द्वितीयः । हे देव सोम । वशी कान्तस्त्वमिन्द्रस्य प्रियमन्नं प्राप्नुहि ॥ अथ तृतीयो मन्त्रः । हे देव सोम ! अस्मत्सखा अस्माकं मित्रभूतस्त्वं विश्वेषां देवानां प्रियमभिलषितमन्नं प्राप्नुहि अग्नेः प्रातःसवनमिन्द्रा माध्यन्दिनं सवनं विश्वे देवास्तृतीयं सवनमिति श्रुतेः सवनदेवेभ्योऽर्पणम् ॥ ५० ॥

इ॒ह रति॑रि॒ह रम॑ध्वमि॒ह धृति॑रि॒ह स्वधृ॑तिः स्वाहा॑ । उ॒प॒सृ॒जन्ध॒रुणं॑ मा॒त्रे ध॒रुणो॑ मा॒तर॑

धयन् रायस्पोषमस्मासु दीधरत् स्वाहा ॥ ५१ ॥

अथ सत्रोत्थानमन्त्रा देवदृष्टाः ॥ का० [ १२, ४, १० ] शालाद्वार्येऽन्वारब्धे ष्विह रतिरिति जुहोतीति । सर्वेषु दीक्षितेष्वध्वर्युस्पृष्टेष्विदानीन्तनगार्हपत्ये घृतं जुहुयात् ॥ पशुदेवतं यजुः । हे गावः ! युष्मदीया रतिः रमणमिह यजमानेष्वस्तु इहैव यूयं रमध्वं युष्माकमिह यजमानेषु धृतिः सन्तोषोऽस्तु स्वधृतिः स्वकीयानामपि धृतिरिहैवास्तु स्वाहा सुहुतमस्तु ॥ का० [ १२, ४, ११ ] अपरामुपसृजन्निति । शालाद्वार्ये एव द्वितीयाहुतिः ॥ उष्णिक् आद्यावष्टाक्षरौ तृतीयो द्वादशार्णः सोष्णिक् । धारयतीति धरुणोऽग्निरस्मासु रायस्पोषं रायो धनस्य पशुपुत्रसुवर्णादेः पुष्टिं दीधरत् धारयतु धारयतेर्लुङि रूपमडभाव आर्षः । किम्भूतो मात्रे धरुणः धरुणम् । षष्ठ्यर्थे चतुर्थी । मातुः पृथिव्या धारयितारमग्निमुपसृजन् समीपं प्रापयन् तथा मातरं पृथिवीं धयन् पिबन् तत्रोत्पन्नं हविर्भक्षयन्नित्यर्थः । स्वाहेति होमार्थः ॥ ५१ ॥

सत्रस्य ऋद्धिरस्यगन्म ज्योतिरमृता अभूम । दिवं पृथिव्या अध्यारुहामाविदाम देवान्त्स्वर्ज्योतिः ॥ ५२ ॥

का० [ १२, ४, १२ ] सत्रस्यर्द्धिं गायन्ति सत्रस्य ऋद्धिरिति । सर्वे दीक्षिता उत्तरहविर्धानापरकूवरीमालभ्य सत्रर्धिसंज्ञकं साम गायन्ति ॥ बृहती यजमानानामात्मस्तुतिः सप्तैकादशनवार्णपादा । हे सोम ! सत्रस्य ऋद्धिः समृद्धिः त्वमसि अतो वयं यजमाना ज्योतिरादित्यलक्षणमगन्म

प्राप्ताः ततः अमृता अमरणधर्मा अभूम भूताः पृथिव्याः सका-शाद्दिवं द्युलोकमध्यारुहाम अध्यारूढ़ाः द्युलोकारूढ़ाः ततो देवानिन्द्रादीनविदाम जानीमः पश्याम इत्यर्थः । वेत्तेर्व्यत्ययेन तुदादित्वे लङि रूपम् ज्योतिर्ज्योतीरूपं स्वः स्वर्गं चाविदाम ॥ ५२ ॥

युवं तमिन्द्रापर्वता पुरोयुधा यो नः पृतन्यादप तन्तमिद्धतं वज्रेण तन्तमिद्धतम् । दूरे चत्ताय छन्त्सद्गहनं यदिनंचत् । अस्माकꣳ शत्रून् परि शूर विश्वतो दर्मा दर्षीष्ट विश्वतः । भूर्भुवः स्वः सुप्रजाः प्रजाभिः स्याम सुवीरा वीरैः सुपोषाः पोषैः ॥ ५३ ॥

का० [ १२, ४, १४ ] युवं तमिति दक्षिणस्याधोऽक्षं प्राञ्चो निःक्रामन्तीति । सर्वे यजमाना दक्षिणहविर्धानाचाधोमार्गेण प्राङ्मुखाः निःसरन्ति । इन्द्रदेवत्यात्यष्टिरवसानतया-पेता षट्पञ्चाशदक्षरत्वात् द्वाभ्यां आद्योऽर्धर्च इन्द्रपर्वतदेवत्यः । हे पुरोयुधा पुरोयुधौ ! पुरोऽग्रे युध्येते तौ पुरोयुधौ इगुपधेति [ पा० ३, १, १३५ ] कप्रत्ययः शत्रूणां पुरतो युद्धस्य कर्त्तारौ हे इन्द्रापर्वता हे इन्द्रपर्वतौ ! युवं युवां तं शत्रुमपहतं विनाशयतम् आदरे वीप्सा तं तम् इद्‌वार्थे तं तमेव शत्रुमपहतं तत्तत्समानमेव सर्वमपि शत्रुं विनाशयतम् तत्रापि विशिष्टं वज्रेण वज्राख्येनायुधेन तं तमित् तं तमेव शत्रुं विनाशयतम् । तदौ वीप्साश्रवणाद्यदोऽपि वीप्सा यो यः शत्रुर्नोऽस्मान् पृतन्यात् पृतनां सेनां कुर्यात् योधयेदित्यर्थः ॥ इदानीमिन्द्रः प्रत्यक्षो वज्रस्य कर्त्तृत्वं चोच्यते हे शूर इन्द्र ! त्वदीया

वज्रो यद्यदा गहनमत्यन्तगम्भीरं वनं जलं वा प्रति दूं चक्षाय चततिर्गतिकर्मा वनेऽतिदूरगताय शत्रवे क्रन्त्स क्रन्दति: कामनार्थ: शत्रुं प्राप्तुं कामयते तदा तमपि दूरगत मिनक्षत् प्राप्नुयात् इनक्षतिर्व्याप्तिकर्मा [ निघ० २, १८, २ वनं दूरगतमपि इन्क्रन् गच्छत्वित्यर्थ:। ततो दर्मा दार यतीति दर्मा दृ विदारे अन्येभ्योऽपि दृश्यन्त इति [ पा० ३ २, ७५ ] मनिन्प्रत्यय: विदारणशीलो वज्र: अस्माकमस्मदो यान् विश्वत: सर्वत: स्थितान् विश्वत: सर्वान् शत्रून् पर्ि दर्षीष्ट परितो विदारयतु दीर्य्यतेराशीर्लिङि तङि रूपम् का० [ १२. ४. २८ ] पृथक्कामेषु भूर्भुव इति। नानाकामेषु यजमानेषु सर्वे वाग्विसर्जनं कुर्यु:। हे भूर्भुव: स्व: अग्नि वायुसूर्य्या वयं प्रजाभि: सुप्रजा: स्याम वीरै: पुत्रै: सुवीरा स्याम पोषै: पुष्टिभि: सुपोषा: स्याम भवेम। एकवचनान्तो- ऽयं व्याख्यात: [ ३, ३९, ७, २८ ] अत्र तु बहुवचनान्तो मन्त्र: ॥ ५३ ॥

सत्रोत्थानं समाप्तम् ॥

परमेष्ठ्यभिधीतः। प्रजापतिर्वाचि व्याहृतायाम्। अन्धो अच्छेतः। सविता सन्याम्। विश्वकर्मा दीक्षायाम्। पूषा सोमक्रयण्याम् ॥५४॥

का० [२५, ६, १ –६ ] परमेष्ठ्यादीन्सतुस्त्रिंशतं जुहोति घर्मदुग्घ्राणे चादोहे चादोह्या दोहस्थानेऽन्यस्या: शालाया वा पुरस्तात् प्राच्या: पुच्छकाण्डादुत्तिलेऽस्थनि हुत्वा दोहयेत् पृषदाज्यस्कन्दने चैक इति। मृण्मयघर्मपालभेदे भिन्नमभि मृश्य परमेष्ठिने स्वाहा प्रजापतये स्वाहेत्यादीन् सलिलाय

स्वाहेत्यन्तांश्चतुस्त्रिंशद्धोमान् जुहोति घर्मदुहो गोर्मरणे तत्स्थाने उदङ्मुख्या: स्थिताया: पत्नीशालापूर्वभागे प्राङ्मुख्या वा पुच्छाद्दक्षिणेऽस्थनि परमेष्ठिने स्वाहेति चतुस्त्रिंशतमा-ज्याहुतीर्हुत्वा तां दोहयेत् स्थालीस्थस्य स्रुक्स्थस्य वा पृषदा-ज्यस्य वा भ्रंशे एके आचार्या: परमेष्ठ्यादीन् जुह्वतीति सूत्रार्थ: ॥ परमेष्ठ्यादयो देवा यज्ञस्य शरीराणि तस्मात्तत्तद-वस्थायां होमे यज्ञश्चिकित्सित: प्रतिसंहितो भवति । तथा च श्रुति: [१२, ५, १, १—२] सोमो वै राजा यज्ञ: प्रजापतिस्तस्यै-तास्तन्वो या एता देवता या एता आहुतीर्जुहोति स यद्यत्र-स्यार्त्तिं तत्प्रति देवतां मन्येत तामनुसमीक्ष्य जुहुयाद्यदि दीक्षोपसत्स्वाहवनीये यदि प्रसुत आग्नीध्रे विवा एतद्यज्ञस्य पर्व स्रꣳसते यज्ज्वलति सा यैव तर्हि तत्र देवता भवति तयैवैत-द्देवतया यज्ञं भिषज्यति तया देवतया यज्ञं प्रतिसन्दधा-तीति । अथ मन्त्रार्थ: । आथ्यायाद्दमिष्ठ ऋषि: । यदा सोमो यजमानेनाभिध्येत: सङ्कल्पितो भवति मनसाभिध्यातस्तदा परमेष्ठी भवति । अयमर्थ: । मनसा ध्यात: सोमा यदि नोप-नमेत् तदा परमेष्ठिने स्वाहेति जुहुयादिति । तथा च श्रुति: [ १२, ५, १, ३ ] स यद्येनं मनसाभिध्यातो यज्ञो नोपनमेत् परिमेष्ठिने स्वाहेति जुहुयात्परमेष्ठी हि स तर्हि भवत्यप-पाप्मानꣳ हत उपैनं यज्ञो नमतीति । वाचि व्याहृतायां सोमेन यक्ष्ये इति वचस्युच्चारिते सति सोम: प्रजापतिना-मको भवति तदा प्रायश्चित्तापत्तौ प्रजापतये स्वाहेति जुहुया-दित्यर्थ: ॥ यदा सोम: अच्छाभिमुख्येन इत: प्राप्तस्तदा अन्धो भवति । सोमं प्रति गतौ किञ्चिन्निमित्तं चेत्तदा अन्धसे स्वाहेति जुहुयात् ॥ सन्यां सोमस्य सम्भृतौ सत्यां सोम: सवि-तृनामको भवति तदा प्रायश्चित्तापत्तौ सवित्रे स्वाहेति जुहु-

यात्। अथ यदि स्नातः किञ्चिदापद्येत सवित्रे स्वाहेति जुहुयादिति श्रुतेः [१२ ५, १, ६] दीक्षायां सत्यां सोमो विश्वकर्मेत्युच्यते तदा विश्वकर्मणे स्वाहेति जुहुयात्। सोमः क्रीयतेऽनया सा सोमक्रयणी गौस्तस्यामानीतायां सत्यां सोमः पूषा भवति। तदा निमित्ते पूष्णे स्वाहेति जुहुयात् ॥ ५४ ॥

इन्द्रश्च मरुतश्च क्रयायोपोत्थितः। असुरः पण्यमानः मित्रः क्रीतः। विष्णुः शिपिविष्ट ऊरावासन्नः। विष्णुर्नरन्धिषः प्रोह्यमाणः ॥ ५५ ॥

क्रयाय द्रव्यदानेनात्मसात्करणायोपोत्थितः उपस्थापितः सोम इन्द्रो मरुन्नामकश्च भवति तदा इन्द्राय मरुद्भ्यश्च स्वाहेति जु०। क्रीयमाणः सोमोऽसुरो भवति असुराय स्वाहेति तदा जु०। यजमानेन क्रीतः सोमो मित्रो भवति तदा मित्राय स्वाहेति जु० ॥ ऊरौ यजमानोत्सङ्गे आसन्नः स्थितः सोमः शिपिविष्टो विष्णुर्भवति। शिपिषु प्राणिषु यज्ञेषु वा विष्टः प्रविष्ट एतद्गुणको विष्णुरित्यर्थः। तदा प्रायश्चित्तापत्तौ विष्णवे शिपिविष्टाय स्वाहेति जु० ॥ प्रोह्यमाणः प्रकटेनोह्यमानः सोमो विष्णुर्नरन्धिषो भवति नरो धीयन्ते आरोप्यन्ते यस्मिन् स नरन्धिः संसारः तं स्यति नाशयति नरन्धिषः जगत्संहर्तृविशिष्टो विष्णुः यद्वा रध हिंसायाम् रध्यति हिनस्ति रन्धिषः हन्ता न रन्धिषः नरन्धिषः जगत्पालको वा विष्णुः। तदा विष्णवे नरन्धिषाय स्वाहेति जुहुयात् ॥ ५५ ॥

सोम आगतः। वरुण आसन्द्यामासन्नः।

अ॒ग्निरा॑ग्नी॑ध्रे । इन्द्रो॑ ह॒वि॒र्धाने॑ । अथ॑र्वोपाव-
क्रि॒यमा॑णः ॥ ५६ ॥

शकटादागतोऽवरूढः सोमनामको भवति तदा सोमाय स्वाहेति जुहुयात् ॥ आसन्द्यां मञ्चिकायामुपविष्टः सोमो वरुणो भवति तदा वरुणाय स्वाहेति जु० ॥ आग्नीध्रे वर्त्तमानः सोमोऽग्निर्भवति तदाग्नये स्वाहेति जु० ॥ हविर्धाने वर्त्तमानः सोम इन्द्रो भवति तदेन्द्राय स्वाहेति जु० ॥ हृदे त्वा मनसे त्वेति मन्त्रेण [ २७ अध्या० १८ ] कण्डनार्थमुपावक्रियमाणः आनीयमानः सोमोऽथर्वनामको भवति तदाथर्वणे स्वाहेति जु० ॥ ५६ ॥

विश्वे॑ दे॒वा अ॒ꣳशुषु॒ न्यु॑प्तः । विष्णु॑रा॒प्री॒-
त॒पा आ॑प्या॒य्यमा॑नः । य॒मः सू॒यमा॑नः । विष्णु॑ः
स॒म्भ्रि॒यमा॑णः । वा॒युः पू॒यमा॑नः । शु॒क्रः पू॒तः ।
शु॒क्रः क्षी॑र॒श्रीः । म॒न्थी स॑क्तु॒श्रीः ॥ ५७ ॥

अंशुषु सोमखण्डेषु न्युप्तः कण्डनं कृत्वारोपितः सोमो विश्वदेवनामको भवति तदा विश्वेभ्यो देवेभ्यः स्वाहेति जुहुयात् ॥ अꣳशुरꣳशुष्ट इत्यादिमन्त्रेण [ ५ अध्या० ७ क० ] आप्याय्यमानः वर्ध्यमानः सोम आप्रीतपा विष्णुर्भवति । आ समन्तात् प्रीतान् स्वस्मिन् प्रीतिमतो भक्तान् पाति रक्षतीत्याप्रीतपाः तद्गुणविशिष्टः । तदा विष्णवे आप्रीतपाय स्वाहेति जु० ॥ अभिषूयमाणः सोमो यमो भवति तदा यमाय स्वा० ॥ सम्यग्भ्रियमाणः पुष्यमाणः सोमो विष्णुर्भवति तदा विष्णवे स्वा० ॥ दशापवित्रेण पूयमानः सोमो वायुर्भवति तदा वायवे स्वा० ॥ पूतः सोमः शुक्रो भवति तदा शुक्राय स्वा० ।

क्षीरेण दुग्धेन श्रीयते मिश्रीक्रियत इति क्षीरश्रीः तदा शुक्र एव सोमो भवति तदापि शुक्राय स्वा० ॥ सक्तुभिर्मिश्रितः सोमो मन्थी भवति तदा मन्थिने स्वा० ॥ ५७ ॥

विश्वे देवाश्चमसेषून्नीतः। असुर्होमायोद्यतः। रुद्रो हूयमानः। वातोऽभ्यावृत्तः। नृचक्षाः प्रतिख्यातः। भक्षो भक्ष्यमाणः। पितरो नाराशꣳसाः सन्नः ॥ ५८ ॥

चमसेषु ग्रहपात्रेषून्नीतो गृहीतः सोमो विश्वदेवसंज्ञो भवति तदा विश्वेभ्यो देवेभ्य स्वाहेति जुहुयात् ॥ होमार्थमुद्यतः सोमोऽसुसंज्ञो भवति तदा असवे स्वा० ॥ हूयमानः सोमो रुद्रो भवति तदा रुद्राय स्वा०। अभ्यावृत्तः होमशेषीभूतः सदः प्रति भक्षणार्थमानीतः सोमो वातो भवति तदा वाताय स्वा० ॥ प्रतिख्यातः ब्रह्मन्नुपह्वयस्वेत्यादिना भक्षणार्थं पृष्टः सोमो नृचक्षा भवति नॄन् मनुष्यान् चष्टे शुभाशुभकारिणः पश्यतीति नृचक्षाः तदा नृचक्षसे स्वा० ॥ भक्ष्यमाणः पीयमानः सोमो भक्षो भवति तदा भक्षाय स्वा० ॥ भक्षयित्वा सन्नः खरेषु सादितः सोमो नाराशंसाः पितरो भवन्ति नरो अस्मिन्नासीना शंसन्तीति नराशंसो यज्ञस्तत्र हिता योग्या वा नाराशंसा नाराशंसगुणविशिष्टाः पितरः तदा निमित्तापत्तौ पितृभ्यो नाराशंसेभ्यः स्वा० ॥ ५८ ॥

सिन्धुरवभृथायोद्यतः। समुद्रोऽभ्यवह्रियमाणः। सलिलः प्रप्लुतः। ययोरोजसा स्कभिता रजाꣳसि वीर्य्येभिर्वीरतमा शविष्ठा। या पत्येते

अप्रतीता सहोभिर्विष्णू अगन् वरुणा पूर्वहूतौ ॥ ५६ ॥

अवभृथार्थमुह्यतः सोमः सिन्धुर्भवति तदा सिन्धवे स्वाहेति जुहुयात् । जलमभिमुखं नीयमानः सोमः समुद्रो भवति तदा समुद्राय स्वा० प्रप्लुतोऽप्सु निमग्नः सोमः सलिलो भवति तदा प्रायश्चित्तापत्तौ सलिलाय स्वा० ॥ एताभिर्यज्ञाहुतिभिर्यज्ञः चिकित्सितः । प्रतिसंहितश्च भवतीत्यर्थः । तथा च श्रुतिः [ १२, ५, १, ३७ ] ता वा एतास्त्रयस्त्रिंशतमाज्याहुतीर्जुहोति त्रयस्त्रिंशद्वै देवाः प्रजापतिस्त्रयस्त्रिंश एतद् सर्वैर्देवैर्यज्ञं भिषज्यति सर्वैर्देवैर्यज्ञं प्रतिसन्दधातीति ॥ का० [ २५, २, ८ ] ययोरोजसेति चोदकेनापसिञ्चेदिति । अभिमर्शनेन विकल्पः । स्कन्नं रसरूपं सोमं जलेन सिञ्चेत् काल्याहुतिहोमं वासनं च कृत्वेति शेषः ॥ विष्णुवरुणदेवत्या त्रिष्टुप् । पूर्वार्धे यच्छब्दोपादानात्तच्छब्दाध्याहारः तौ विष्णू तौ वरुणा वरुणौ । एकत्र विष्णुशब्दस्यैकशेषोऽन्यत्र वरुणशब्दस्य । तुल्यकार्यत्वादुभावपि विष्णू उभावपि वरुणा कर्मभूतौ प्रति अगन् गतं स्कन्नं यज्ञसाधनमिति शेषः । कदा पूर्वहूतौ पूर्वस्मिन्नाह्वाने यावत् प्रधानं हूयते तावदेव विष्णुं वरुणं च प्रति स्कन्नं हविर्गतमित्यर्थः । विशेषणं वा पूर्वं हूयेते तौ पूर्वहूतौ विष्णुवरुणौ प्रति हविरगमिति सम्बन्धः । तौ कौ ययोर्विष्णुवरुणयोरोजसा बलेन रजांसि लोकाः स्कभिता स्तम्भितानि । लोका रजांस्युच्यन्त इति यास्कः [ निरु० ४, १९ ] स्कभ्नातिः स्तम्भनार्थः । किञ्च या यौ विष्णुवरुणौ पत्येते ईशाते ऐश्वर्यं कुर्वाते जगतामीश्वरावित्यर्थः । पत ऐश्वर्ये दिवादिरात्मनेपदी यद्वा

पत्येते परसैन्येषु श्येनाविव पततः। किम्भूतौ वीर्यैर्भिर्वीर्यै-र्बलैर्वीरतमा अत्यन्तं वीरौ। तथा शविष्ठा। शव इति बल-नाम [ निघ० २, ९, ३ ] अत्यन्तं बलवन्तौ अतिशवस्विनौ शविष्ठौ विन्मतोर्लुगिति [ पा० ५, ३, ६५ ] विनिलोपे इष्ठनि टिलोपे शविष्ठाविति रूपम्। तथा सद्भोभिर्बलैरप्र-तीता अप्रतिगतौ न केनापि सम्मुखं गन्तुं शक्यो अनन्यया-ध्याविल्यर्थः न प्रतीयेते तावप्रतीतौ। एवंविधौ विष्णुवरुणौ प्रति स्रुवं हविर्गतमित्यर्थः॥ ५९ ॥

दे॒वान् दिव॑मगन् य॒ज्ञस्ततो॑ मा॒ द्रवि॑णमष्टु॒ मनु॒ष्या॒न॒न्तरि॑क्षमगन् य॒ज्ञस्ततो॑ मा द्रवि॑णमष्टु पि॒तॄन् पृ॑थि॒वीम॑गन् य॒ज्ञस्ततो॑ मा॒ द्रवि॑णमष्टु॒ यं कं च॑ लो॒कमग॑न् य॒ज्ञस्ततो॑ मे भ॒द्रम॑भूत्

॥ ६० ॥

का० [ २५, २, ८ ] देवान् दिवमिति सोमे। सोमे स्रुवे देवान् दिवमित्यभिमर्शनम्॥ अत्यष्टिर्यज्ञदेवत्या यजमानाशीः। अयं यज्ञो देवान् वाय्वादीन् प्राप्य दिवं द्युलोकमगन् अग-च्छत् ततो द्युलोकस्थाद् यज्ञात् द्रविणं विशिष्टभोगसाधनरूपं धनं यज्ञफलभूतं मा मामष्टु व्याप्नोतु अश्नोतेः पदविकरणयो-र्व्यत्ययः। अनेन सुकृतिनामारोहक्रममभिधायेदानीमवरोह-क्रममाह। ततो द्युलोकादवरोहणकाले यज्ञो मनुष्यान् मनुष्य-लोकमागच्छन् अन्तरिक्षलोकमगन् गतः तत्र स्थितात् यज्ञाद् द्रविणं यज्ञफलं मामष्टु व्याप्नोतु। दक्षिणायने गमनागमन-माह अयं यज्ञो धूमादिमार्गेण पितॄन् प्राप्य पृथिवीं भूलोक-

मगन् तत्र स्थिताद् यज्ञाद् द्रविणं मामष्टु व्याप्नोतु । किं बहुना यं कञ्च यं कमपि लोकं यज्ञोऽगन् गतस्तस्माद् यज्ञात् मे मम भद्रं कल्याणमभूद्भूयादिति यजमानेनाशास्यते ॥ ६० ॥

चतु॑स्त्रि॒ꣳशत्तन्त॑वो॒ ये वि॑तत्नि॒रे य इ॒मं य॒ज्ञꣳ स्व॒धया॒ दद॑न्ते । तेषां॑ छि॒न्नꣳ सम्वे॒तद्द॑धामि॒ स्वाहा॑ घ॒र्मो अप्ये॑तु दे॒वान् ॥ ६१ ॥

घर्मदेवत्या पङ्क्तिस्त्रिष्टुब् वा द्विचत्वारिंशदक्षरत्वात् । कात्यायनेनास्या विनियोगो नोक्तः । महावीरभेदे घृतहोमः शाखान्तरे । तन्वन्ति प्रायश्चित्तशमनेन यज्ञं विस्तारयन्तीति तन्तवो देवाश्चतुस्त्रिंशत्संख्याका ये परमेष्ठ्यादय इमं यज्ञं वितत्निरे वितेनिरे वितन्वन्ति तनोतेर्लिटि तङि प्रथमबहुवचने लिटि धातोरनभ्यासस्येति [ पा० ६, १, ८ ] द्वित्वे तनिपत्योश्छन्दसीत्युपधालोपे [ पा० ६, ४, ९९ ] तत्निरे इति रूपम् । ये चेमं यज्ञं स्वधयान्नेन ददन्ते धारयन्ति दद दानधारणयोः तेषां यज्ञं वितन्वतां देवानां यत् छिन्नं तदेतत् सम्दधामि । उकारः पादपूरणः । स्वाहा सुहुतमस्त्वनेन घृतहोमेन महावीरः संहितो भवत्वित्यर्थः । घर्मो महावीरः संहितः सन्देवानप्येतु देवान् प्रति गच्छतु ॥ ६१ ॥

य॒ज्ञस्य॒ दोहो॒ वित॑तः पुरु॒त्रा सो अ॑ष्ट॒धा दिव॑म॒न्वात॑तान । स य॑ज्ञ धुक्ष्व॒ महि॑ मे प्र॒जाया॑ꣳ रा॒यस्पोषं॒ विश्व॒माय॑रशीय॒ स्वाहा॑ ॥ ६२ ॥

का० [ २५, ६, ७ ] सोमेज्योपपाते चैकैकां यथाकालꣳ

हुत्वा यज्ञस्य दोह इति वाचयतीति। सोमयागे यज्ञाङ्गविनाशे परमेष्ठ्यादिचतुस्त्रिंशदाहुतीनां मध्ये यथाकालमथ यदि पच्यमान इत्यादिश्रुत्युक्ते [ १२, ५, १, १० ] काले एकैकामाहुतिं हुत्वा यजमानं वाचयेत्॥ यज्ञदेवत्या त्रिष्टुप् पूर्वार्धः परोऽक्षो द्वितीयः प्रत्यक्षोऽतो यच्छब्दाध्याहारे सा योजना। हे यज्ञ! स त्वं मे मम प्रजायां सन्ततौ महि महिमानं धुक्ष्व क्षर देहीत्यर्थः। यद्वा महि महान्तं पूर्वोक्तं दोहं धुक्ष्व अहं च त्वत्प्रसादाद्रायो धनस्य पोषं पुष्टिं विश्वं सर्वमायुश्चाशीय व्याप्नुयाम्। स कः यस्य यज्ञस्य यजनीयस्य तव दोह आहुतिपरिणामः स प्रसिद्धो यज्ञफलरूपः पुरुत्रा बहुधा विततः प्रसृतः सन् दिग्भेदेनाष्टधा भिद्यमानो द्युलोकमन्वाततान व्याप भूमिमन्तरिक्षं च व्याप्य स्वर्गं व्यापेत्यर्थः। ब्रह्मादिस्तम्बपर्य्यन्तो भूतग्रामो यज्ञपरिणाम इति भावः॥ ६२॥

आपवस्व हिरण्यवदश्ववत्सोम वीरवत्।
वाजं गोमन्तमाभर स्वाहा॥ ६३॥

इति माध्यन्दिनीयायां वाजसनेयिसंहितायामष्टमोऽध्यायः॥ ८॥

का० [ २५, ६, ८ ] आपवस्व हिरण्यवदित्युद्गातृहोमो ध्वाङ्क्षारोहणे यूपस्येति। पशौ सोमे च यूपस्य काकारोहणे उद्गाता होमः कार्य्यः सोमदेवत्या गायत्री कश्यपदृष्टा। हे सोम! त्वमापवस्व आगच्छ तत्र क्रियाविशेषणानि कथं हिरण्यवत् कनकयुक्तमश्ववदश्वयुक्तं वीरवद् वीरयुक्तं यथा तथा पाहीत्यर्थः। स्वर्णाश्ववीरानस्मभ्यं देहीत्यर्थः। किञ्च हे सोम

गोमन्तं धेनुयुक्तं वाजमन्नमाभर आहर अन्नं धेनूंश्च देहीत्यर्थः। स्वाहा सुहुतमस्तु हयग्रहोर्भग्छन्दसोति [ पा० ८, २, ३२ वा० १ ] भकारः॥ ६३॥

प्रायश्चित्तानि समाप्तानि॥

श्रीमन्महीधरकृते वेददीपे मनोहरे।
ग्रहग्रहान्निमित्तात्तोऽष्टमोऽध्यायः समीरितः॥ ८॥

---

## नवमोऽध्यायः।

देव॑ सवितः॒ प्रसु॑व य॒ज्ञं प्रसु॑व य॒ज्ञप॑तिं॒ भगा॑य। दि॒व्यो ग॑न्ध॒र्वः के॑त॒पूः केतं॑ नः पुनातु वा॒चस्पति॒र्वाजं॑ नः स्वदतु॒ स्वाहा॑॥ १॥

चतुर्थाध्यायमारभ्याष्टमान्तमध्यायपञ्चके अग्निष्टोमम न्वास्तदीयप्रासङ्गिका मन्त्राश्चोक्ताः। नवमेऽध्याये वाजपेय मन्त्रा उच्यन्ते चतुस्त्रिंशत्कण्डिकापर्यन्तम्। तेषां बृहस्पती न्द्रावृषी॥ तत्र का० [ १४, १, ११ ] देव सवितरिति जुहोति यजत्यादिष्विति। वाजपेयाङ्गभूतानां यजूनां दीक्षणीया प्रायणीयादीनामादिषु सकृद्गृहीतमाज्यं जुहोति। सवितृ देवत्या त्रिष्टुप्। हे सवितः सर्वस्य प्रेरकान्तर्यामिन्! हे देव दीप्यमान! यज्ञं वाजपेयलक्षणं यागं प्रसुव अभ्यनुजानीहि प्रवर्तयेत्यर्थः। यज्ञपतिं यजमानं भगाय भजनीयायानुष्ठानफ लायैश्वर्याय प्रसुव प्रेरय। एवं मण्डलाधिष्ठातारं पुरुषमुक्त्वे दानीं मण्डलं प्रत्याह त्वत्प्रसादाद्दिवि भवो दिव्यो गन्धर्वो गवां रश्मीनां धारयिता केतपूः केतमन्नं नाम्नमुच्यते केतमन्नं पुना तीति केतपूः अन्नस्य पावयिता सूर्यमण्डलरूपो देवो नोऽस्माकं

केतमन्नं पुनातु शोधयतु । किञ्च त्वत्प्रसादाद्वाचस्पतिः प्रजापतिर्नोऽस्माकं वाजमन्नं हविर्लक्षणं स्वदतु आस्वादयतु स्वाहा सुहुतमस्तु ॥ १ ॥

ध्रुवसदं त्वा नृषदं मनःसदम् । उपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णामि । एष ते योनिरिन्द्राय त्वा जुष्टतमम् ॥ अप्सुषदं त्वा घृतसदं व्योमसदम् । उपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णामि । एष ते योनिरिन्द्राय त्वा जुष्टतमम् ॥ पृथिविसदं त्वान्तरिक्षसदं दिविसदं देवसदं नाकसदम् । उपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णामि । एष ते योनिरिन्द्राय त्वा जुष्टतमम् ॥ २ ॥

का० [ १४. १. २३, २. १ ] प्रातःसवनेऽतिग्राह्यान् गृहीत्वा षोडशिनं पञ्च चैन्द्रान् ध्रुवसदमिति प्रतिमन्त्रमिति । प्रातःसवन आग्रयणानन्तरं त्रीनतिग्राह्यानादाय षोडशिनं चादाय पञ्चेन्द्रदेवत्यान् ग्रहान् गृह्णीयात् ॥ त्रीणि यजूंषि इन्द्रदेवत्यानि । हे सोम ! त्वम् उपयामयतत्युपयामो ग्रहस्तेन गृहीतोऽसि । इन्द्राय जुष्टं प्रियं त्वा त्वां गृह्णामि किम्भूतं त्वां ध्रुवसदं ध्रुवे स्थिरेऽस्मिन् लोके सदनोति ध्रुवसत्तम् नृषु मनुष्येषु सीदतीति नृषत्तम् मनसि सीदतीति मनःसत्तम् । सोमाहुतिपरिणामभूतो रस एषु लोकेष्ववर्त्तमानः सोमाख्यास्त उच्यते ॥ सादयति हे ग्रह ! एष खरप्रदेशस्तव स्थानम् । इन्द्राय प्रियतमं त्वां साद-

यामोति शेषः ॥ अथ द्वितीयम् । अप्सुषदमुदकमदं प्रति सीदतीति व्योम्नि अन्तरिक्षे सीदतीति । शेषो व्याख्यातः ॥ अथ तृतीयम् । पृथिव्यामन्तरिक्षे दिवि स्वर्गे देवेषु नास्ति अकं दुःखं यस्मिन् तस्मिन्नाके सुखान्विते स्वर्गविशेषे सीदतीति तादृशम् । शेषमृजु ॥ २ ॥

अपाꣳ रसमुद्वयसꣳ सूर्य्ये सन्तꣳ समाहितम् । अपाꣳ रसस्य यो रसस्तं वो गृह्णाम्युत्तमम् ॥ उपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णामि । एष ते योनिरिन्द्राय त्वा जुष्टतमम् ॥ ३ ॥

अथ चतुर्थम् । रसदेवत्यानुष्टुप् सूर्य्ये समाहितं समारोपितं स्थापितं सन्तमपामुदकानां रसं सारं वायुमहं गृह्णामि एष वा अपाꣳरसो योऽयं पवत इति श्रुतेः [ ५, १, २, ६ ] । किम्भूतं रसमुद्वयसमुद्गतं वयोऽन्नं यस्माद्वायोः स उद्वयास्तम् वायुनैव धान्यानि निष्पद्यन्ते । किञ्च अपां रसस्य वायोर्यो रसः सारः प्रजापतिर्हिरण्यगर्भः स हि भूर्लोककाग्निवायुसूर्य्यर्ग्यजुःसामादिरूपः हे देवाः ! वो युष्मदर्थं तं प्रजापतिमहं गृह्णामि किम्भूतमुत्तमम्उत्कृष्टतमम् । यःशब्दोऽनर्थको वा सोमरूपेण वायुं तदभिमानिनं प्रजापतिं च गृह्णामीत्यर्थः । उपयामेति व्याख्यातम् । एष त इति साद नम् ॥ ३ ॥

ग्रहा ऊर्जाहुतयो व्यन्तो विप्राय मतिम् तेषां विशिप्रियाणां वोऽहमिषमूर्जꣳ समग्रभम् ॥

उपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णामि। एष ते योनिरिन्द्राय त्वा जुष्टतमम्। सम्पृचौ स्थः सं मा भद्रेण पृङ्क्तम्। विपृचौ स्थो वि मा पाप्मना पृङ्क्तम् ॥ ४ ॥

अथ पञ्चमम्। ग्रहदेवत्यानुष्टुप् हे ग्रहास्तेषां वो युष्माकं सम्बन्धिनमिषमन्नमूर्जं रसं चाहं ममग्रभं ममग्रहं सम्यगगृह्णामि। किम्भूतानां विशिप्रियाणाम् शिप्रे हनू नासिके वा इह तु हनू शिप्रयोर्हन्वोः कर्म शिप्रियं हनुचलनम् विगतं शिप्रियं येषु ग्रहेषु ते विशिप्रियाः सम्यगभिषुताः सुपूताश्च तत्र हि हन्वोर्व्यापारो नास्ति सुपेयत्वात्। तेषां केषां ये यूय-मूर्जाहुतयः ऊर्जमन्नरसमाह्वयन्ति ये गेर्वा ते ऊर्जाहुतयः। तथा विप्राय मेधाविने इन्द्राय मतिं विशिष्टबुद्धिं व्यन्तः जानन्तो गमयन्तो वा वीत्यस्य गतिकर्मणो धातोः शतृप्रत्यये रूपम् ॥ उपयाम० एष ते इति व्याख्याते ॥ का० [ १४, २, ७ ] ऊपर्युपर्यन्नमध्वर्युर्धारयत्यधोऽधो नेष्टा सम्पृचाविति। अध्वर्युः सोमग्रहमन्नोपरि धारयति नेष्टा सुराग्रहमन्नाधस्तात् सहैव धारणं मन्त्रपाठश्च ॥ ग्रहदेवते यजुषी। हे सोमसुरा-ग्रहौ! यौ युवां सम्पृचौ स्थः सम्पृक्तौ भवथः। पृचौ सम्पर्के क्विप्। तौ युवां मा मां भद्रेण भन्दनीयेन कल्याणेन सम्पृङ्क्तं संसृजतं संयोजयतम् ॥ का० [ १४, २, ८ ] विपृचावित्याहरत इति। अध्वर्युनेष्टारौ स्वं स्वं ग्रहं स्वममोपमानयतः। हे ग्रहौ! यतो युवां विपृचौ वियुक्तौ स्थः ततो मा मां पाप्मना विपृङ्क्तं वियोजयतम् ॥ ४ ॥

इन्द्रस्य वज्रोऽसि वाजसास्त्वयायं वाजं

सेत्। वाजस्य नु प्रसवे मातरं महीमदितिं नाम वचसा करामहे। यस्यामिदं विश्वं भुवनमाविवेश तस्यां नो देवः सविता धर्म साविषत् ॥ ५ ॥

का० [ १४, ३, १ ] मरुत्वतीयान्त इन्द्रस्य वज्र इति रथावहरणमिति ॥ महामरुत्वतीयान्ते माहेन्द्रात् पूर्वं रथवाहनाच्छकटाद्रथमवतारयति ॥ रथदेवत्यं यजुः। हे रथ! त्वमिन्द्रस्य वज्रोऽसि। इन्द्रेण यदा वृत्राय वज्रं प्रहृतं तत्त्रिधा जातं तस्यैको भागो रथ इतीन्द्रो ह यत्र वृत्राय वज्रं प्रजहारेत्यादिश्रुत्या [ १, २, ४, १ ] उक्तम्। किम्भूतस्त्वं वाजसाः वाजमन्नं सनोति ददातीति वाजसाः षण् दाने विट्प्रत्ययः विड्वनोरनुनासिकस्यादित्याकारः [ पा० ६, ४, ४१ ]। किञ्च अयं यजमानस्त्वया वज्रीभूतेन सहायेन वाजमन्नं सेत् सनोतेः सिनोतेर्वा रूपम् अन्नं सनुयात्सम्भजेत् यद्वा सिनुयाद्बध्नीयात् बह्वन्नवान् भूयादित्यर्थः ॥ का० [ १४, ३, २ ] चात्वालमावर्त्तयति वाजस्येति धूर्गृहीतमिति। अवतारितं रथं धुरि गृहीत्वा चात्वालाद्दक्षिणेनानीय वेद्यां स्थापयेत् ॥ पृथिवीदेवत्यातिजगती अन्त्यः पादः सवितृदेवत्यः। नु एवार्थे। वाजस्यान्नस्य प्रसवेऽनुज्ञायामेव वर्त्तमाना वयं यां भूमिं नाम प्रसिद्धं यथा तथा वचसा वेदवाक्येन एवंविधामनुकूलां करामहे करवामः कुर्महे वा करोतेः अपि रूपम्। किम्भूतां भूमिं मातरं जगन्निर्मात्रीं महीं महतीं महनीयां वा अदितिमदीनामखण्डितां वा। किञ्च इदं विश्वं भुवनं सर्वं भूतजातं यस्यां भूमावाविवेश आविष्टम्। सविता देवस्तस्यां

भूमावेव नोऽस्माकं धर्म धारणमवस्थानं साविषत् प्रसुवतां प्रेरयतु। षू प्रेरणे इति धातोर्णिजन्तस्य लेटि साविषदिति रूपम् सिब्बहुलं लेटि [ पा० ३, १, ३४ ] लेटोऽडाटौ [ पा० ३, ४, ९४ ] इतश्च लोपः परस्मैपदेष्विति [ पा० ३, ४, ९७ ] सूत्रैः ॥ ५ ॥

अप्स्वन्तरमृतमप्सु भेषजमपामुत प्रशस्तिष्वश्वा भवत वाजिनः। देवीरापो यो व ऊर्मिः प्रतूर्तिः ककुन्मान्वाजसास्तेनायं वाजꣳसेत् ॥६॥

का० [ १४, ३, ३, ५ ] अश्वान् प्रोक्षत्यपोऽवनीयमानान् स्नातान्वागतानप्स्वन्तरिति देवीराप इति वा समुच्चयो वेति। स्नानार्थमपो नीयमानान् स्नात्वागतान्वाश्वानप्स्वन्तरिति देवीराप इति मन्त्रेण वोभाभ्यां वा प्रोक्षेत्॥ अश्वदेवत्यावसानरहिता पुरउष्णिक् अस्याः पाद आद्यो द्वादशाक्षरो द्वावष्टाक्षरौ। अप्सु उदकेषु अन्तर्मध्ये अमृतमवस्थितमप्सु भेषजमारोग्यपुष्टिकरमौषधं चावस्थितम्। हे अश्वाः! यूयं तत्रामृतभेषजयुतास्वप्सु वाजिनाऽन्नवन्तो भवत उतापि च अपां प्रशस्तिषु प्रशस्तेषु भागेषु यूयं भवत॥ द्वितीयः प्रोक्षणमन्त्रः अब्देवत्यं यजुः। हे देवीः देव्यो दीप्यमाना आपः! वो युष्माकं य ऊर्मिः कल्लोलस्तेन सितोऽयमश्वो वाजमन्नं सेत् समुयाद् बध्नीयाद्वा। किम्भूत ऊर्मिः प्रतूर्तिः प्रकृष्टा तूर्तिर्वेगो यस्य प्रत्वरणशीलः। तथा ककुन्मान् ककुच्छब्देन वृषभस्कन्धे उन्नतप्रदेश उच्यते सादृश्ये मतुप् तत्सामान्यादुदकनिचयैः संयुक्तो बहुलोदकसङ्घातवान् ककुन्मानित्युच्यते। तथा वाजसाः अन्नस्य दाता॥ ६ ॥

वातो वा मनो वा गन्धर्वाः सप्तविंꣳशतिः । ते अग्रेऽश्वमयुञ्जंस्ते अस्मिञ्जवमादधुः ॥ ७ ॥

का० [ १४, ३, ६ ] दक्षिणं युनक्ति वातो वेति । दक्षिणमश्वं रथे योजयेत् ॥ अश्वदेवत्या उष्णिक् । वाशब्दौ समुच्चयार्थौ । वातो वायुर्मन इन्द्रियं सप्तविंशतिर्नक्षत्राणि गन्धर्वा गोर्भूमेर्धर्तारः ते वातादयोऽग्रे पूर्वमश्वमयुञ्जन् रथे योजितवन्तः ते च वातादयोऽस्मिन्नश्वे जवं वेगमादधुः स्थापितवन्तः ॥ ७ ॥

वातरꣳहा भव वाजिन् युज्यमान इन्द्रस्येव दक्षिणः श्रियैधि । युञ्जन्तु त्वा मरुतो विश्ववेदस आ ते त्वष्टा पत्सु जवं दधातु ॥ ८ ॥

का० [ १४, ३, ७ ] उत्तरं वातरꣳहा इति । उत्तरमश्वं युनक्ति ॥ अश्वदेवत्या त्रिष्टुप् । हे वाजिन् वेगवन्नश्व ! युज्यमानः सन् त्वं वातरंहा वातवद्वेगयुक्तो भव वातस्येव रंहो यस्य । किञ्च दक्षिणो दक्षिणभागे स्थितस्त्वमिन्द्रस्याश्व इव श्रिया शोभया युक्त एधि भव । किञ्च विश्ववेदसः सर्वज्ञाः सर्वधना वा मरुतो हे अश्व ! त्वां युञ्जन्तु रथे नियोजयन्तु । किञ्च त्वष्टा देवः हे अश्व ! ते तव पत्सु पादेषु जवं वेगमादधातु स्थापयतु ॥ ८ ॥

जवो यस्ते वाजिन्निहितो गुहा यः श्येने परीत्तो अचरच्च वाते । तेन नो वाजिन् बलवान् बलेन वाजजिच्च भव समने च पारयिष्णुः ॥

वाजिनो वाजजितो वाजꣳ सरिष्यन्तो बृहस्पतेर्भागमवजिघ्रत ॥ ९ ॥

का० [ १४, ३, ८ ] दक्षिणाप्रष्टिं जवो यस्त इति। दक्षिणायां धुरि प्रकृष्टं देशमश्नुत इति दक्षिणाप्रष्टिस्तादृशं हतोऽयमश्वं युनक्ति ॥ अश्वदेवत्या जगती। हे वाजिन्नश्व! यस्ते तव जवो वेगः गुह्या गुहायां हृदयप्रदेशे निहितोऽवस्थापितः। सुपां सुलुगिति [ पा० ७, १, ३९ ] गुहाशब्दात् ङेर्लुक्। श्येने श्येनाख्ये पक्षिणि यो जवः परीत्तः त्वयैव परिदत्तः सन् अचरत् चरति प्रवर्तते यश्च ते जवः परिदत्तः सन् वाते अचरत् वायौ चरति। परिपूर्वाद्ददातेर्निष्ठायामच उपसर्गात्त इति [ पा० ७, ४, ४७ ] तादेशे दस्तीति [ पा० ६, ३, १२४ ] दादेशे तकारे परे इगन्तोपसर्गस्य दीर्घे परीत्त इति। हे वाजिन्! तेन त्रिविधेन बलेन वेगलक्षणेन बलवान् वेगवान् सन् नोऽस्माकं वाजजित् अन्नस्य जेता भव। च पुनः समने सङ्ग्रामे पारयिष्णुः पारयिता च भव पारप्रापको भव। पार तीर कर्मसमाप्तावित्यस्माच्चुरादिणिजन्तात् णेश्छन्दसीति [ पा० ३, २, १३७ ] इष्णु प्रत्ययः ॥ का० [ १४, ३, १० ] बार्हस्पत्यमेनानाघ्रापयति वाजिन इति। बार्हस्पत्यं चरुमश्वानाघ्रापयेत् ॥ अश्वदेवत्यं यजुः। वाजजितोऽन्नस्य जेतारो वाजमन्नं प्रति सरिष्यन्तो गमिष्यन्तो हे वाजिनो अश्वाः! यूयं बृहस्पतेर्भागं चरुमवजिघ्रत आघ्राणं कुरुत ॥ ९ ॥

देवस्याहꣳ सवितुः सवे सत्यसवसो बृहस्पतेरुत्तमं नाकꣳ रुहेयम्। देवस्याहꣳसवितुः सवे सत्यसवस इन्द्रस्योत्तमं नाकꣳ रुहेयम्।

देवस्याहꣳ सवितुः सवे सत्यप्रसवसो बृहस्पते-
रुत्तमं नाकमरुहम्। देवस्याहꣳ सवितुः सवे
सत्यप्रसवस इन्द्रस्योत्तमं नाकमरुहम्॥ १०॥

का० [ १४, ३, १२ ] देवस्याहमिति ब्रह्मा रथचक्रमारोहत्युत्करे नाभिमात्रे स्थाणौ स्थितमिति। उत्करप्रदेशे निखातस्य नाभिमात्रकाष्ठस्याग्रे स्थितं रथचक्रं ब्रह्मारोहेत्॥ ब्राह्मणकर्तृके वाजपेये लिङ्गोक्तदेवतम्। सत्यसवसः सत्याभ्यनुज्ञस्य सवितुर्देवस्य सवेऽनुज्ञायां वर्त्तमानोऽहं बृहस्पतेः सम्बन्धिनमुत्तममुत्कृष्टं नाकं स्वर्गं रुहेयमारोहामि। क्षत्रियवाजपेये चक्रारोहमन्त्रः। तत्र इन्द्रस्य नाकं रुहेयमिति विशेषः॥ का० [ १४, ४, ८ ] आगतेषु ब्रह्मावरोहति देवस्याहमिति। यजमानादीनां सप्तदशशरथेषु सप्तदशशरप्रक्षेपप्रदेशे निखातामौदुम्बरीं शाखां प्रदक्षिणीकृत्य देवयजनदेशमागतेषु सत्सु ब्रह्मा रथचक्रादवरोहति। विप्रयज्ञे पूर्वमन्त्रेण क्षत्रे उत्तरेण॥ सत्यं प्रकृष्टं च सवो यस्येति सत्यप्रसवाः। अत्र प्रशब्दः प्रकर्षद्योतकः। अरुहमिति भूतकालः नाकमारूढवानस्मीत्यर्थः। शेषं पूर्ववत्॥ १०॥

बृहस्पते वाजं जय बृहस्पतये वाचं वदत
बृहस्पतिं वाजं जापयत। इन्द्र वाजं
जयेन्द्राय वाचं वदतेन्द्रं वाजं जापयत॥११॥

का० [ १४, ३, १५ ] बृहस्पते वाजमित्येकं दुन्दुभिमाहन्ति तूष्णीमितरानिति। अनुवेद्यन्तस्थापितसप्तदशदुन्दुभीनां मध्ये एकं मन्त्रेणाहन्ति षोडश तूष्णीम्॥ यजुः विप्रयज्ञे मन्त्रः। हे दुन्दुभयः! यूयं बृहस्पतये इति वाचं वदत किम्

यत् हे बृहस्पते! त्वं वाजमन्नं जय। किञ्च हे दुन्दुभयः! यूयमेव बृहस्पतिं वाजमन्नं जापयत बृहस्पतिनान्नजयं कारयतेत्यर्थः। जि जये इत्यस्य हेतुमण्णिचि क्रीङ्जीनां णाविति [ पा० ६, १, ४८ ] धातोराकारे कृते अर्त्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग्णाविति [ पा० ७, ३, ३६ ] पुगागमे लोण्मध्यमबहुवचने जापयतेति रूपम्॥ चतयज्ञे दुन्दुभिवादनमन्त्रः। हे दुन्दुभयः! यूयमिन्द्रायेति वाचं वदत यत् हे इन्द्र! त्वं वाजं जय। इन्द्रं वाजं यूयं जापयतेति पूर्ववत् ॥ ११ ॥

एषा वः सा सत्या संवागभूद्यया बृहस्पतिं वाजमजीजपताजीजपत बृहस्पतिं वाजं वनस्पतयो विमुच्यध्वम्। एषा वः सा सत्या संवागभूद्ययेन्द्रं वाजमजीजपताजीजपतेन्द्रं वाजं वनस्पतयो विमुच्यध्वम् ॥ १२ ॥

का० [ १४, ४, ९—१० ] एषा व इति मन्त्राहतमवहरते तूष्णीमितरानिति। सप्तदशदुन्दुभीनां मध्ये मन्त्रवादितं मन्त्रेणावतारयति षोडश तूष्णीं स्थाणुभ्यः॥ पूर्वो मन्त्रो विप्रयज्ञे उत्तरः चात्रे। हे दुन्दुभयः! वो युष्माकमेषा वाक् सत्या समभूत् तथ्या जाता यया वाचा बृहस्पतिं वाजमजीजपत। पुनर्बृहस्पतिं वाजमजीजपत अभ्यासे भूयांसमर्थं मन्यन्त इति [ निरु० १०, ४२ ] यास्कोक्तेर्भूयानर्थो ग्राह्यः अत्यन्तं बृहस्पतिमन्नजयं कारितवन्तो यूयं यया वाचा सा सत्या जातेत्यर्थः। जयतेर्णिजन्तस्य लुङि मध्यमबहुवचनेऽजीजपतेति रूपम्। हे वनस्पतयो वनस्पतिविकारा दुन्दुभयः! यूयं विमु-

ज्योतिषोपेतां त्वा त्वामिष्टकां प्रजापतिः सादय स्थापयतु किमर्थं विश्वस्मै सर्वस्मै प्राणायापानाय व्यानाय प्राणादिमप्यत्यर्थम्। किञ्च हे इष्टके! त्वं विश्वं सर्वं ज्योतिर्यच्छ नियच्छोष्व देहि वा अग्निश्च ते तवाधिपतिः स्वामी तया देवतयाग्निलक्षणया ध्रुवा स्थिरा सती सीद उपविश अङ्गिरस्वदङ्गिरसां चयने यथा स्थिरा सीद तद्वदत्रापीत्यर्थः ॥ २४ ॥

मधु॑श्च माध॑वश्च वास॑न्तिकावृतू अ॒ग्नेर॑न्तःश्लेषोऽसि॒ कल्पे॑तां द्यावा॑पृथि॒वी कल्प॑न्ता॒माप॒ ओष॑धयः॒ कल्प॑न्ताम॒ग्नयः॒ पृथ॒ङ्मम॒ ज्यैष्ठ्या॑य॒ सव्र॑ताः। ये अ॒ग्नयः॒ सम॑नसोऽन्त॒रा द्यावा॑पृथि॒वी इ॒मे वास॑न्तिकावृ॒तू अ॑भि॒कल्प॑माना॒ इन्द्र॑मिव दे॒वा अ॑भि॒संवि॑शन्तु॒ तया॑ दे॒वत॑याङ्गिर॒स्वद्ध्रु॒वे सी॑दतम् ॥ २५ ॥

का० [ १७, ४, २४ ] ऋतव्ये मधुश्च माधवश्चेति। विश्वज्योतिषः पुरो द्वे पद्ये प्राग्लक्षणे ऋतव्येष्टके अनूकमभित उदच्य उपदधाति॥ ऋतुदैवतं यजुः' अष्टात्तरगताक्षरत्वाच्छन्दो नास्ति। मधुश्चैत्रो मासः माधवो वैशाखः तावुभौ वासन्तिकौ वसन्तसम्बन्धिनौ ऋतू अवयवौ यद्वा मधुमाधवौ वसन्त एव वासन्तिक ऋतुः द्विवचनमेकवचनार्थम्। हे तादृश वसन्ताख्य ऋतो! त्वं चीयमानस्याग्नेरन्तःश्लेषोऽसि अन्तर्मध्ये व्यवस्थितः सन् श्लेषकोऽसि यथा कुड्यस्यान्तर्दार्ढ्याय काष्ठपाषाणादयः श्लिष्यन्ते तद्वत्। ममाग्निं चिन्वतो यजमानस्य ज्यैष्ठ्याय ज्येष्ठत्वायोत्कर्षाय इमे द्याव्यापृथिवी द्यावापृथिव्यौ कल्पेतां स्वोचितमुपकारं सम्पादयेताम्। यद्वा ममेति

तवस्थाने व्यत्ययः। द्यावाभूमी तवोत्कर्षाय कल्पेताम् आप-स्त्रोषधयश्च तव ज्यैष्ठ्याय कल्पन्ताम् समानं व्रतं कर्म येषां ते सव्रताः एकस्मिन् चयनाख्यकर्मण्यवस्थिताः पृथक् नानाभूताः अग्नयः स्वयमातृणाद्या इष्टकाः तव ज्यैष्ठ्याय कल्पन्ताम् अंग्नयो हैते पृथग्यदेता इष्टका इति श्रुतेरग्निशब्देनेष्टका उच्यन्ते। किञ्च इमे द्यावापृथिवी अन्तरा अनयोर्द्यावापृथि-व्योर्मध्ये वर्त्तमानाः समनसः एकमनस्का ये अग्नयः अन्यैरपि चिताः तेऽपि वासन्तिकावृतू वसन्तमृतुमभिकल्पमाना सम्या-दयन्तः सन्तः अभिसंविशन्तु एतत्कर्माश्रयन्तु। तत्र दृष्टान्तः इन्द्रमिव देवाः यथा देवा इन्द्रं परिचरणायाभिसंविशन्ति एवमन्येष्टका वसन्तं परिचरणायाभिसंविशन्तु॥ सादयति तया देवतया सादिते हे ऋतव्येष्टके! युवामङ्गिरसां कर्मणीव ध्रुवे स्थिरे सत्यौ सीदतमुपविशतम्॥ २५॥

अषा॑ढासि॒ सह॑माना॒ सह॒स्वारा॑ती॒: सह॑स्व पृत॑नाय॒तः। स॒हस्र॑वीर्य्यासि॒ सा मा॑ जिन्व॥२६॥

का० [ १७, ४, २५ ] अषाढासीत्यषाढाम्। अषाढासंज्ञका मिष्टकां पत्नीकृतां पद्यां प्राग्लक्षणामृतव्याभ्यां पूर्वां संलग्ना-मनूके उपदधाति॥ सवितृदृष्टेष्टकादेवत्या विराडनुष्टुप्। हे इष्टके! त्वमषाढासि शत्रून् सहते इत्यषाढा। तथा च श्रुतिः [ ७, ४, २, ३२ ] ते देवा एतामिष्टकामपश्यन्नषाढामिमामेव तामुपादधत तामुपधायासुरान् सपत्नान् भ्रातृव्यानस्मात्सर्व-स्मादसहन्त तस्मादषाढेति। कीदृशी त्वं सहमाना सहत इति सहमाना अभिभवनशीला स्वभावतः अतोऽरातीः अदान शीलाः प्रजाः सहस्वाभिभव। पृतनां संग्राममिच्छन्ति ते

पृतनायन्तीति पृतनायन्तः क्यजन्ताच्छतृप्रत्ययः तान् पृतनायतः संग्रामेच्छून् शत्रून् सहस्व । किञ्च त्वं सहस्रवीर्या बहुसामर्थ्या यासि सा मा मां जिन्व प्रीणीहि ॥ २६ ॥

मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः ।

माध्वीर्नः सन्त्वोषधीः ॥ २७ ॥

का० [ १७, ४, २७ ] कूर्मं दधिमधुघृतैरनक्ति मधु वाता इति । मिश्रितैर्दधिमधुघृतैर्ऋक्त्रयेण कच्छपमनक्ति ॥ गोतमदृष्टा विश्वदेवदेवत्यास्तिस्रो गायत्र्यः ऋतं यज्ञमिच्छतीति ऋतयन् तस्मै ऋतयते यजमानाय वाता वायवो मधु मधुमन्तो रसवन्तो वान्त्विति शेषः । ऋतयतीत्यत्र क्यचि चेति [ पा० ७, ४, ३३ ] प्राप्तस्येत्वस्य न छन्दस्यपुत्रस्येति [ पा० ७, ४, ३५ ] अभावः अश्वाघस्यादिति [ पा० ७, ४, ३७ ] अश्वाघयोरेव क्यच्यात्वविधानादकृत्सार्वधातुकयोः [ पा० ७, ४, २५ ] इत्यात्वमपि न । संहितायां तु छान्दसो दीर्घः । मधु मधुमानित्यग्रे [ २८ ] मतुप्प्रत्ययदर्शनात् सर्वत्र मधुशब्दाग्रे मतुन्नेयः । सिन्धवः स्यन्दमाना नद्यः समुद्रा वा मधु मधुवत् रसवत् उदकं क्षरन्ति स्रवन्त्वित्यर्थः । तिङां तिङ इति [ पा० ७, १, ३९ वा० ३ ] लोटो लडादेशः । ओषधीः ओषधयो नोऽस्माकं माध्वीः मधुररसोपेताः सन्तु ॥ २७ ॥

मधु नक्तमुतोषसो मधुमत्पार्थिवꣳरजः ।

मधु द्यौरस्तु नः पिता ॥ २८ ॥

नक्तं रात्रिर्नोऽस्माकं मधु मधुमत् मधुररसोपेतमानन्दकरमस्तु । उतापि च उषसो दिवसा अपि मधुमन्तः सन्तु ; पार्थिवं रजः पृथिवीलोको मातृभूतो मधुमत् मधुररसोपेत

मस्तु । पिता पितृभूतो द्यौः द्युलोको मधु मधुमान् मधुररसो-पेतोऽस्तु ॥ २८ ॥

मधु॑मान् नो॒ वन॒स्पति॒र्मधु॑माँ २॥ अस्तु॒ सूर्यः॑ । माध्वी॒र्गावो॑ भवन्तु नः ॥ २९ ॥

वनस्पतिरश्वत्थादिर्नोऽस्माकं मधुमान् रसवान् यज्ञसाधन-भूतोऽस्तु सूर्यो मधुमान् सन्तापराहित्यलक्षणमाधुर्यरसोपेतो-ऽस्तु गावः यज्ञसाधनभूता रश्मयः नोऽस्माकं माध्वीः मधुमत्यो रसवत्यो भवन्तु रसो वै मध्विति [ ७, ५, १, ४ ] श्रुतेः । वाता-दीनि रसवन्त्यस्माकं भोग्यानि भवन्त्विति सर्वोऽर्थः ॥ २९ ॥

अ॒पां गम्भ॑न् सीद॒ मा त्वा॒ सूर्यो॒ऽभिता॑प्सी॒-न्मा॒ग्निर्वै॑श्वान॒रः । अच्छि॑न्नपत्राः प्र॒जा अनु॒-वीक्षा॒स्वानु॑ त्वा दि॒व्या वृष्टिः॑ सचताम् ॥ ३० ॥

का० [ १७, ४, २८, ५, १ ] अरत्निमात्रेऽषाढां दक्षिणे-नावकासूपरिष्टाच्च पुरुषमभिमुखमपां गम्भन्निति तिसृभिः । अषाढादक्षिणदेशे हस्तमात्रे पद्मालाकद्वयमन्तराले मुक्त्वा तृतीये पद्मालोके पूर्वमेव स्थापितास्ववकासु शैवालेषु पुरुष-सम्मुखमृक्त्रयेण कूर्ममुपदधातीति सूत्रार्थः ॥ स्वराट्-पङ्क्तिः दशाक्षरचतुष्पादा तृतीयो द्वादशाक्षरः कूर्मदेवत्या । कूर्मः प्रजापतिरादित्यो वा । तृतीया द्यावापृथिवीया । हे कूर्म ! अपां जलानां गम्भन् गम्भनि गम्भीरे स्थाने रविमण्डले त्वं सीद उपविश । एतद्वापां गम्भिष्ठं यत्रैष एतत्तपतीति [ ७, ५, १, ८ ] श्रुतेः । तत्रोपविष्टं त्वा त्वां सूर्यो माभि-ताप्सीत् अभितो मा सन्तापयतु । वैश्वानरः सर्वनरहितो-ऽग्निश्च मा सन्तापयतु । त्वं चात्र स्थितः सन् प्रजा इष्टका-

रूपा अनुवीचस्व निरन्तरं पश्य। कीदृशीः प्रजाः अच्छिन्नपत्राः अच्छिन्नान्यनवखण्डितानि पत्राणि अवयवा यासां ताः अखण्डिता इष्टकाः कुर्वित्यर्थः। इमा वै सर्वाः प्रजा या इमा इष्टकास्ता अरिष्टा अनार्त्ता अनुवीचस्वेति [ ७, ५, ७, ८ ] श्रुतेः। किञ्च दिव्या दिवि भवा वृष्टिः त्वा त्वामनु सचतां सेवतामुदकेन नित्यं सिक्ता भवेत्यर्थः॥ ३०॥

**त्रीन् स॒मु॒द्रान् सम॑सृपत् स्व॒र्गान॒पां पति॑-र्वृ॒ष॒भ इष्ट॑कानाम्। पुरी॑षं॒ वसा॑नः सुकृ॒तस्य॑ लो॒के तत्र॑ गच्छ॒ यत्र॒ पूर्वे॒ परे॑ताः॥ ३१॥**

का० [ १७, ५, २ ] षड्र्यति मध्यमयेति। तिसृणां मध्यमया त्रीन् समुद्रानिति ऋचा हस्तस्थमेव कूर्मं कम्पयतीति सूत्रार्थः। कूर्मदेवत्या त्रिष्टुप्। हे कूर्म! यो भवान् त्रीन् समुद्रान् लोकान् समसृपत् सम्यक् प्राप्तो भवति। सृप्लृ गतौ पुषादीत्यादिना [ पा० ३, १, ५८ ] च्लेरङ्। समुद्रवन्ति स्वकारणात्समुद्रवन्तीति समुद्रा लोकास्तान् कीदृशान् स्वर्गान् भोगसाधनभूतान्। कीदृशो भवान् अपां पतिः जलेशः इष्टकानां वृषभः वर्षिता। किञ्च यत्र यस्मिन् स्थाने पूर्वे पुरातनाः कूर्माः अन्वेष्वग्निषूपहिताः परेताः परागताः सुकृतस्य शोभनकृतस्याग्नेस्तत्र तस्मिन् लोके स्थाने त्वं गच्छ। किं कुर्वन् पुरीषं हुतान् पशून् वसानः आच्छादयन्॥ ३१॥

**म॒ही द्यौः पृ॑थि॒वी च॑ न इ॒मं य॒ज्ञं मि॑मिक्षताम्। पि॒पृ॒तां नो॒ भरी॑मभिः॥ ३२॥**

व्याख्याता [ ८, ३२ ] ३२॥

**विष्णोः॒ कर्मा॑णि पश्यत॒ यतो॑ व्र॒तानि॑ पस्पृ॒-**

ग्रे। इन्द्रस्य युज्यः सखा ॥ ३३ ॥

का० [ १७, ५, ३ ] उलूखलमुसले स्वयमातृणाया उत्तरतः अरत्निमात्रे औदुम्बरे प्रादेशमात्रे चतुरस्रमुलूखलं मध्यसंगृहीतमूर्ध्वं वृत्तं दक्षिणमुलूखलाद्विष्णोः कर्माणीति। चतुष्कोणं मध्यसङ्कुचितं खातहीनमुदुम्बरतरुजमूर्ध्वं मुलूखलम् वृत्तं मुसलम् ते उभे स्वयमातृण्णोत्तरे देशे तन्मध्याद्धस्तमात्रे तृतीये लोके विष्णोरिति मन्त्रेण सहैवोपदधातीति सूत्रार्थः ॥ व्याख्याता [ ६, ४ ] ॥ ३३ ॥

ध्रुवासि धरुणेतो जज्ञे प्रथममेभ्यो योनिभ्यो अधि जातवेदाः। स गायत्र्या त्रिष्टुभानुष्टुभा च देवेभ्यो हव्यं वहतु प्रजानन् ॥ ३४ ॥

का० [ १७, ५, ४ ] उलूखल उखां कृत्वोपशयां पिष्ट्वा न्युप्य पुरस्ताद् ध्रुवासीत्युखाम्। पूर्वमुलूखलोपर्युखां तूष्णीं कृत्वा तत उपशयां मृदं पिष्ट्वोखापुरस्ताद्भूमौ प्रक्षिप्य तत उखां मन्त्रद्वयेनोपदध्यादिति सूत्रार्थः॥ उखादेवत्या त्रिष्टुप्। हे उखे! धरुणा जगतो धारयित्री त्वं ध्रुवा स्थिरासि। अथाग्निजनकत्वेनोखा स्तूयते। योऽग्निरितोऽस्याः उखायाः सकाशात् प्रथममादौ जातवेदाः जातप्रज्ञानोऽग्निरधिजज्ञे तत एभ्यो योनिभ्यः स्वकारणेभ्योऽरण्यादिभ्योऽधिजज्ञे जायते। सोऽग्निः प्रजानन् स्वाधिकारं प्रकर्षेण जानानः सन् गायत्र्या त्रिष्टुभानुष्टुभेति छन्दस्त्रयेण देवेभ्यो देवार्थं हव्यमस्मद्धविर्वहतु ॥ ३४ ॥

इषे रायो रमस्व सहसे द्युम्न ऊर्जे अप-

त्वाय । सम्राडसि स्वराडसि सारस्वतौ त्वोत्सौ प्रावताम् ॥ ३५ ॥

उखादेवत्या बृहती । हे उखे ! त्वं रमस्व अत्र क्रीडां कुरु किमर्थम् इषे अन्नार्थं राये धनार्थं सहसे बलाय द्युम्ने द्युम्नाय यशोऽर्थम् । द्युम्नं द्योततेर्यशो वान्नं वेति [ निरु० ५, ५ ] यास्कः । ऊर्जे उपसेचनाय पयोदधिघृतादिकाय अपत्याय पुत्रपौत्रादिकाय । रमस्वेति सर्वत्र सम्बन्धः । किञ्च सम्यग्राजत इति सम्राडसि स्वेनैव राजत इति स्वराडसि । एवम्भूतां त्वां सारस्वतौ सरस्वतीसम्बन्धिनौ उत्सौ उत्स्यन्दनौ कूपौ प्रवाहौ वा त्वा त्वां प्रावतां प्रकर्षेण पालयताम् । तौ चोत्सौ मनोवाचौ । शास्त्रज्ञानाय कूप इवोत्स्यन्दतीति मनः कूपः तत्प्रतिपादनं कुर्वन्ती वागपि कूपः । मनो वै सरस्वान्वाक् सरस्वत्येतौ सारस्वतावुत्साविति [ ७, ५, १, ३१ ] श्रुतेः । यद्वा सारस्वतौ उत्सौ ऋग्वेदसामवेदौ त्वां रक्षताम् । तथाच तित्तिरिश्रुतिः ऋक्साम वै सारस्वतावुत्साविति ॥ ३५ ॥

अग्ने युक्ष्वा हि ये तवाश्वासो देव साधवः । अरं वहन्ति मन्यवे ॥ ३६ ॥

का० [ १७, ५, ५ ] अग्ने युक्ष्वा हीति प्रत्यृचꣳ स्रुवा हुतौ जुहोत्युखायाम् । ऋग्द्वयेनोखामध्ये द्वे आहुती जुहोति ॥ अग्निदेवत्ये द्वे गायत्री आद्या भरद्वाजदृष्टा द्वितीया विरूपदृष्टा । हे देव दीप्यमान ! हे अग्ने ! ये साधवः दान्तास्ते तवाश्वासः हया अरमलमत्यर्थं मन्यवे यज्ञाय वहन्ति प्रापयन्ति देवानिति शेषः तानश्वान् युक्ष्व हि योजय । हि पादपूरणः ॥ ३६ ॥

युक्ष्वा हि देवहूतमाँ २॥ अश्वाँ अग्ने रथीरिव। नि होता पूर्व्यः सदः ॥ ३७ ॥

अग्ने ! त्वमश्वान् युक्ष्व योजय हिशब्दः प्रसिद्धौ। कीदृशान् देवहूतमान् देवानाह्वयन्तीति देवहुवः अतिशयेन देवहुवो देवहूतमाः तान् देवानामतिशयेनाह्वातॄन्। द्व्यचोऽतस्तिङ इति [ पा० ६, ३, १३५ ] संहितायां युक्ष्वेत्यस्य दीर्घः। दृष्टान्तमाह रथीरिव रथीः रथस्वामी यथाश्वान् योजयति तद्वत्। रथोऽस्यास्तीति रथीः ईर् मत्वर्थे। किञ्च त्वं पूर्व्यः पूर्वम्भवः पुरातनो होता मानुषाद्धोतुः प्रथमोऽग्र्यो भूत्वा निसदः अस्मिन् यागे होतृषदनं निषीद। छन्दसीति [ पा० ३, ४, ६ ] लोडर्थे लुङ्। देवहूतमानश्वानित्यत्रातोऽटि नित्यमिति [ पा० ८, ३, ३ ] आकारस्यानुनासिकत्वम् दीर्घादटीति [ पा० ८, ३, ९ ] नस्य रुः ॥ २७ ॥

सम्यक् स्रवन्ति सरितो न धेना अन्तर्हृदा मनसा पूयमानाः। घृतस्य धारा अभिचाकशीमि हिरण्ययो वेतसो मध्ये अग्नेः ॥ ३८ ॥

का० [ १७, ५, ७ ] मुखे करोति सम्यक् स्रवन्तीति। सम्यगिति मन्त्रेण पञ्चपशूनां मुखे एकैकं हिरण्यशकलं क्षिपतीति सूत्रार्थः॥ लिङ्गोक्तदेवता त्रिष्टुप्। हिरण्मयपुरुषोद्देशेनायं मन्त्रः। अग्नेर्मध्ये चितिमध्ये हिरण्ययो वेतसः पुरुषो यो निहितोऽस्ति तं प्रति धेना अन्नानि सम्यक् स्रवन्ति क्षरन्ति हूयमानानि हवींषि तं प्रति गच्छन्तीत्यर्थः। अन्नं वै धेना इति [ ७, ५, २, ११ ] श्रुतेः। कीदृश्यो धेनाः मनसा पूयमानाः पवित्रीक्रियमाणाः कीदृशेन मनसा अन्त-

हृदा हृदयान्तर्वर्त्तमानेन हृत्प्रतिष्ठितेन विषयव्यावृत्तेनाव्याकुलेनेत्यर्थः। श्रद्धायुक्तेन मनसा दत्ता इत्यर्थः। अन्तर्हृदयेन मनसा सतावं पूतं य ऋजुरिति [ ७, ५, २, ११ ] श्रुतेः। तत्र दृष्टान्तः सरिता न नञार इवार्थः सरित इव यथा नद्यः समुद्रं प्रति स्रवन्ति गच्छन्ति तद्वत्। न केवलं धेनाः स्रवन्ति घृतस्य धारा अपि स्रवन्ति। ताश्च धेना घृतधाराश्च हिरण्मयं पुरुषं प्रति स्रवन्तीरहमभिचाकशीमि पश्यामि। चाकशीतिः पश्यतिकर्मा यङ्लुगन्तः॥ ३८॥

ऋ॒चे त्वा॑ रु॒चे त्वा॑ भा॒से त्वा॒ ज्योति॑षे त्वा। अभू॑द्दि॒दं विश्व॑स्य॒ भुव॑नस्य॒ वाजि॑नम॒ग्नेर्वै॑श्वान॒रस्य॑ च॥ ३९॥

हिरण्यशकलदेवत्यार्षी बृहती पादार्णनियमाभावात्॥ का० [ १७, ५, ८ ] नासिकयोर्ऋचे त्वेति। मन्त्राभ्यां पशूनां नसोः शकलप्राशनमित्यर्थः॥ हे हिरण्यशकल! ऋचे ऋग्वेदाय तदुक्तहौत्रादिसिद्धये त्वा त्वां वामनसि प्रास्यामि। रुचे दीप्तये शोभाप्राप्त्यै त्वां दक्षिणनसि प्रास्यामि। शिराण्सि प्रत्यक्ष्णोति का० [ १७, ५, १३ ] आदौ वामनसि ततो दक्षिणे॥ का० [ १७, ५ १० ] अक्ष्णोर्भासे त्वेति। भासे त्वेति मन्त्राभ्यां नेत्रयोस्तद्वद्धिरण्यशकलप्रासनम्। भासे कान्त्यै त्वां वामनेत्रे प्रास्यामि। ज्योतिषे तेजसे तत्प्राप्त्यै त्वां दक्षनेत्रे प्रास्यामि॥ का० [ १७, ५, ११ ] श्रोत्रयोरभूदिदमिति। कर्णयोः प्रास्यति अभूदिदमग्निर्ज्योतिषेति मन्त्राभ्याम्॥ इदं श्रोत्रं विश्वस्य सर्वस्य भुवनस्य भूतजातस्य वैश्वानरस्य विश्वेभ्यः सर्वेभ्यो नरेभ्यो

हितस्याग्नेश्च वाजिनं वाचो श्राद्ध अभूत् सर्वप्राणिशब्दा वह्नेश्च शब्दोऽपि श्रोत्रेणैव श्रूयतेऽतः श्रोत्रे हिरण्यं प्रास्याmीति शेषः। वाचमेति जानाति वाजिनम्। वाच्पूर्वादेतेरौणादिको नक्प्रत्ययः छान्दसः कुत्वाभावः झलां जशोऽन्त इति [ पा० ८, २, ३९ ] जश्त्वम्। अयमग्निर्वैश्वानर इत्युपक्रम्य तस्यैष घोषो भवति यमेतत् कर्णावपिधाय शृणोतीति श्रुत्यनुवादकोऽयं मन्त्रः। यद्वायमर्थः इदं श्रोत्रेऽस्यमानं हिरण्यं विश्वस्य भुवनस्य वैश्वानरस्याग्नेश्च वाजिनं वीर्यं तेजोजनकमभूत् भवति अतोऽस्यामीति॥ ३९॥

अ॒ग्निर्ज्योति॑षा॒ ज्योति॑ष्मान् रु॒क्मो वर्च॑सा॒ वर्च॑स्वान्। स॒ह॒स्र॒दा अ॑सि स॒ह॒स्रा॑य त्वा॥४०॥

हिरण्यशकलदेवत्योष्णिक् द्वौ पादावष्टार्णौ तृतीयो द्वादशको व्यूहेन। दक्षिणश्रोत्रे शकलं प्रास्यति। अयमग्निः ज्योतिषा पशुश्रोत्रस्थितहिरण्यतेजसा ज्योतिष्मान् तेजस्वी अस्तु रुक्मो रोचमानोऽग्निर्वर्चसा हिरण्यकान्त्या वर्चस्वान् कान्तिमानस्तु वाह्यप्रभा ज्योतिः शरीरगतकान्तिर्वर्च इति ज्योतिर्वर्चसोर्भेदः। यद्वा श्रोत्रमेव हिरण्यज्योतिषाग्निरिव ज्योतिष्मदस्तु हिरण्यवर्चसा च वर्चस्वदस्तु रुक्म इव सुवर्णपुरुष इव उभयत्रेवाध्याहारेण लिङ्गव्यत्ययेन च योजनेत्यर्थः॥ का० [१७, ५, १४] सहस्रदा इति पुरुषशिर उदक्स्थ्य मध्ये। पुरुषशिर आदायोखामध्ये वक्ष्यमाणमन्त्रेणोपदधातीति सूत्रार्थः॥ हे पुरुष! त्वं सहस्रदाः सहस्रसंख्यस्य दातासि अतः सहस्राय सहस्रधनलाभाय त्वा त्वामुपदधामीति शेषः। आदौ पुरुषशिरसि शकलप्रासनं ततोऽश्वगोऽव्यजानां क्रमेण। एकपशुपक्षे

मुखादिषु प्रत्येकं मन्त्र-सप्त पञ्चकत्व एकैकमित्यन्ये [ का० १७, ५, ११ । शतपथ० ७, ५, २, १० ] ॥ ४० ॥

आदित्यं गर्भं पयसा समङ्ग्धि सहस्रस्य प्रतिमां विश्वरूपम्। परिवृङ्ग्धि हरसा माऽभिमꣳस्थाः शतायुषं कृणुहि चीयमानः ॥ ४१ ॥

का० [ १७, ५, १७ ] आदित्यं गर्भमिति प्रतिमन्त्रं क्रमेण। पुरुषादीनां शिरसि पञ्चमन्त्रक्रमेणैकैकमुपदधा-तीत्यर्थः ॥ पञ्च ऋचोऽग्निदेवत्यास्त्रिष्टुभः। आदौ पुरुष-शिर उपदधाति मन्त्रं। हे पुरुषशिरः! त्वमादित्यं वित्याग्निं पयसा समङ्ग्धि संसञ्जय। अञ्जेर्लोटि मध्यमैकवचनं रूपम्। पयसि स्थाप्य स्वयमञ्ज्यन्ते। आदत्ते पशूनादित्यवदाष्टे वा सर्वपशूनामित्यादित्योऽग्निरनः। कीदृशमादित्यं गर्भं गृह्णाति पशूनिति गर्भः धनादाद् [illegible] छन्दसि तम्। सहस्रस्य प्रतिमा बहुधनस्य प्रतिमाभूतं बहुधनपदमित्यर्थः। विश्वरूपं स[illegible]आदित्यत्वात् सर्वरूपप्रकाशकमित्यर्थः। सर्वाणि रूपाणि [illegible]। [illegible] हरसा सर्ववागोपहारक-मग्नेर्ज्योतिहरस्तेनाग्निनेजसा यजमानं परिवृङ्ग्धि परि-वर्जय। वृजी [illegible] [illegible]दिः लोट्। मा अभिमंस्थाः यज-मानं मा हिंसीः। मन्यतेर्लुङ् अभिपूर्वो मन्यतिर्हिंसार्थः। किञ्च चीयमानः उपधीयमानः सन् यजमानं शतायुषं शताब्दजीविनं कृणुहि कुरु ॥ ४१ ॥

वातस्य जूतिं वरुणस्य नाभिमश्वं जज्ञानꣳ सरिरस्य मध्ये। शिशुं नदीनाꣳ हरिमद्रिबुध्नमग्ने मा हिꣳसीः परमे व्योमन् ॥४२॥

अश्वशिर ईशाने उपदधाति। हे अग्ने चित्याग्ने! त्वमश्वमिमं मा हिंसीः ज्वालया मा दह। कीदृशं वातस्य जूतिं जूतिर्गतिः प्रीतिर्वा वायोर्गतिस्वरूपं वायुवच्छीघ्रगतिमित्यर्थः। वायोः प्रीतिं प्रेमपात्रं वरुणस्य नाभिं जलेशस्य नाभिमिव नाभिः अन्तरं यथा नरेण स्वनाभिर्वस्त्रावरणादिना पाल्यते तद्वद्वरुणेनातिप्रियत्वात्पाल्यम्। यतः सरिरस्य सलिलस्य जलस्य मध्ये समुद्रे जज्ञानं जायमानं। जन् जनने श्लादिः शानच् गमहनेत्युपधालोपः [ पा० ६, ४, ९८ ] अप्सुयोनिर्वा अश्व इति श्रुत्यन्तरात् अतएव नदीनां शिशुं बालं नदीपतिः समुद्रः पिता अतएव नदीनां मातृत्वात्तच्छिशुम्। हरिं हरितवर्णं यद्वारूढं नरं हरतीति हरिस्तम्। अद्रिबुध्नमद्रिर्गिरिः बुध्नं मूलं कारणं यासां ता अद्रिबुध्ना आपस्तज्जातमद्रिबुध्नमपत्यप्रत्ययलोपः। यद्वा बुध्नपदे नकारः। उपजनश्छान्दसः! अद्रिबुद्धमद्रिभिर्बुद्धं ज्ञातम् पथि तत् खुरैः क्षुण्णानद्रीन् पाषाणान् दृष्ट्वा नरैर्ज्ञातं यदत्राश्वो गत इति उत्कृष्टमित्यर्थः। परमे व्योमन् एषु लोकेषु निषीदन्तमिति शेषः। इमे वै लोकाः परमं व्योमेति [ ७, ५, २, १८ श्रुतेः। यद्वा विविधमोम अवनं रक्षणम् परममुत्कृष्टं यद्वोम नानोपद्रवेभ्यः पालनं तत्र स्थापितमिति शेषः॥ ४२ ॥

अजस्रमिन्दुमरुषं भुरण्युमग्निमीडे पूर्वचित्तिं नमोभिः। स पर्वभिर्ऋतुशः कल्पमानो गां मा हिंसीरदितिं विराजम्॥ ४३ ॥

गोशिर आग्नेय्यामुपदधाति [illegible] ईडे स्तौमि ईड स्तुतौ। कीदृशमजस्रमनु[illegible] इन्दुमिदि पर-

मैश्वर्ये इन्दतीतीन्दुः ऐश्वर्यापितं यद्वा उन्दो क्लेदे उनत्ति क्लेदयति जनमनांसीतीन्दुः उन्देरिच्चादेरिति [ उणा० १, १२ ] कुप्रत्ययादीकारौ। अरुषं रोषरहितं यद्वा अरुर्मर्म मर्मस्थानीयं रहस्यम् आराध्यमित्यर्थः। पूर्वचित्तिं पूर्वैर्महर्षिभिः चित्तिं चेत्तव्यम्। नमोभिरन्नैर्भुरण्युं भर्तारं सर्वेषां पोष्टारम्। हे अग्ने ! एवं स्तूयमानः स त्वं गामुपधीयमानां मा हिंसीः मा जहि। कीदृशीमदितिमखण्डितामदीनां वा विराजं विविधं राजमानाम् दुग्धदानाद्द गोर्विराट् तस्यै शृतं तस्यै शर इति [ ३, ३, ३. २ ] दशवीर्याभिप्रायं विराट्त्वम्। कीदृशः त्वं पर्वभिः पञ्चिष्टकाभिरमावास्यादिपर्वभिर्वा ऋतुशः ऋतौ ऋतौ कल्पमानः कर्माणि सम्पादयन्॥ ४३ ॥

वरूत्रीं त्वष्टुर्वरुणस्य नाभिमविं जज्ञानाᳬ रजसः परस्मात्। महीᳬ साहस्रीमसुरस्य मायामग्ने मा हिᳬसीः परमे व्योमन्॥ ४४ ॥

वायव्येऽविशिर उपदधाति। हे अग्ने परमे व्योमन् ! उत्कृष्टे रक्षणस्थाने स्थापितामविं मा हिंसीः। कीदृशीं त्वष्टुः रूपाणां निर्मातुर्देवस्यानुग्रहाद्वरूत्रीं वृणोति कम्बलादिना छादयति लोकानिति वरूत्री ताम्। वरुणस्य नाभिं नाभिस्थानीयां नाभिवद्रक्षणीयाम् वारुणी त्वाष्ट्री चाविः। परस्माद्रजसः दिग्रूपाल्लोकाज्जज्ञानं जायमानम्। श्रोत्रं वै परमᳬ रजो दिशो वै श्रोत्रं दिशः परमᳬ रज इति [ ७, ५, २, २० ] श्रुतेः। यद्वा परस्माद्रजसः प्रजापते रजोगुणाज्जायमानाम्। महीं महतीम्। साहस्रीं सहस्रमूल्याहां सहस्रोपकारक्षमां वा। असुरस्य मायामसवः प्राणा विद्यन्ते यस्य

सोऽसुरः मत्वर्थे रः प्राणवती मायां प्रज्ञां मीयते ज्ञायतेऽनया माया प्रज्ञा प्राणिनां प्रज्ञाप्रदामित्यर्थः॥ ४४॥

यो अग्निरग्नेरध्यजायत शोकात् पृथिव्या उत वा दिवस्परि। येन प्रजा विश्वकर्मा जजान तमग्ने हेडः परि ते वृणक्तु॥ ४५॥

नैर्ऋत्येऽजमुपदधाति। योऽग्निरग्निरूपोऽजोऽग्नेः प्रजापतेः शोकादध्यजायत प्रजापतेस्तापादुत्पन्नः। अत्राग्निः प्रजापतिः। उत वा अपि च दिवः शोकात् पृथिव्याश्च शोकाद्योऽजः पर्यजायत उत्पन्नः। अग्निपृथिव्यादिवां शोकादजोत्पत्तिः श्रुत्योक्ता। यद्वै प्रजापतेः शोकादजायत तद्दिवश्च पृथिव्यै च शोकादजायतेति [ ७, ५, २, २१ ] विश्वकर्मा स एव प्रजापतिर्येनाजेन साधनेन प्रजा जजान उत्पादितवान्। अजस्य वाग्रूपत्वेन प्रजोत्पत्तिः श्रुत्युक्ता। वाग्वा अजो वाचो वै प्रजा विश्वकर्मा जजानेति [ ७, ५, २, २१ ] हे अग्ने चित्य! ते तव हेडः क्रोधः तमजं परिवृणक्तु परित्यजतु त्वयाजे कोपो न कार्य इत्यर्थः॥ माधवस्तु पृथिव्या उपरि स्थितात् वा अथवा दिवः परि द्युलोकोपरि स्थितात् शोकात् शुच दीप्तौ [illegible] दीप्तियुक्तादग्नेः प्रजापतेः सकाशाद्योऽग्निरूपोऽजोऽध्यजायत विश्वकर्मा येनाजेन प्रजाः पशून् जजान। अजस्य पशुसाधनत्वं तैत्तिरीयश्रुत्योक्तम्। ततोऽजस्तूपरः समभवत्तꣳ स्वायै देवताया आलभत ततो वै प्रजाः पशूनसृजतेति। शेषं पूर्ववत्॥ ४५॥

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य

वरु॑णस्या॒ग्नेः । आप्रा॒ द्यावा॑पृथि॒वी अ॒न्तरि॑-क्ष॒ꣳ सूर्य॑ आ॒त्मा जग॑तस्त॒स्थुष॑श्च ॥ ४६ ॥

का [ १७, ५, १८ ] चित्रं देवानामित्यर्धर्चशः स्रुवाहुती मध्यमे । अर्धर्चद्वयेन पुरुषशिरस्याहुतिद्वयं जुहोतीत्यर्थः ॥ व्याख्याता [ ७, ४२ ] ॥ ४६ ॥

इ॒मं मा हि॑ꣳसीर्द्वि॒पादं॑ प॒शुꣳ स॑हस्रा॒क्षो मे॒धाय॑ ची॒यमा॑नः । म॒युं प॒शुं मे॒धम॑ग्ने जुषस्व॒ तेन॑ चिन्वा॒नस्त॒न्वो॒ नि षी॑द ॥ म॒युं ते॒ शुग॑ृच्छतु॒ यं द्वि॒ष्मस्तं ते॒ शुग॑ृच्छतु ॥ ४७ ॥

का॰ [ १७, ५, १८ ] वह्निर्वेद्युदङ्तिष्ठन्नुपतिष्ठत उत्सर्गं-रिमं मा हिꣳसीरिति प्रतिमन्त्रम् । अग्ने रुत्तीर्य वेदेर्बहिर्द-क्षिणे उदङ्मुखस्तिष्ठन्निमं मेत्युत्सर्गसंज्ञैः पञ्चमन्त्रैः पुरुषादि-शिरांस्युपतिष्ठतेऽध्वर्युः एकपशुपक्षे तमेव पञ्चभिरित्यर्थः ॥ अग्निदेवत्याः पञ्च त्रिष्टुभः आद्ययोरन्ते द्वे यजुषी तिसृणा-मन्ते त्रीणि त्रीणि यजूंषि । हे अग्ने ! सहस्राक्षः सहस्र-मक्षीणि यस्य सः हिरण्यशकलरूपसहस्रनेत्रो मेधाय यज्ञाय चीयमानः चयनेन संस्क्रियमाणः सन् त्वमिमं द्विपादं पशुं पुरुषरूपं मा हिंसीः मा दह । हिरण्यशकलैर्वा एष सह-स्राक्षः द्विपाद्वा एष पशूनां यत् पुरुष इति च [ ७, ५, २, ३८ ] श्रुतेः । यदि वादनेच्छा तर्हि मेधं शुद्धं मयुं पशुं तुरङ्गवदनं किम्पुरुषं पशुं जुषस्व सेवस्व भक्षयेत्यर्थः । किम्पुरुषो वै मयुरिति [ ७, ५, २, ३२ ] श्रुतेः । मयुं कृष्णमृगं वा जुषस्व मयुर्मृगेऽश्ववदन इति कोशोक्तेः । तेन मयुभक्षणेन तन्वः ज्वालारूपास्तनूः चिन्वानः पोषयन्निह निषीद द्वितीयार्थे तन्व

इति प्रथमा। इतो यजुः ते तव शुक् शोकः सन्तापो मयुं किन्नरं मृगं वा ऋच्छतु प्राप्नोतु। किञ्च यं पुरुषं प्रति वयं द्विष्मः द्वेषं कुर्मः ते तव शुक् तमृच्छतु॥ ४७॥

इमं मा हिꣳसीरेकशफं पशुं कनिक्रदं वाजिनं वाजिनेषु। गौरमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वो निषीद॥ गौरं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छतु॥ ४८॥

अथाश्वस्य। हे अग्ने! इममेकशफमेकखुरं पशुमश्वं मा हिंसीः। एकशफो वा एष पशुर्यदश्व इति [७, ५, २, ३३] श्रुतेः। कीदृशं कनिक्रदमत्यन्तं क्रन्दितारं ह्रेषमाणम्। क्रन्देर्दाधर्तीत्यादिना [पा० ७, ४, ६५] यङ्लुकि निपातः। वाजो वेगो विद्यते येषां ते वाजिनः वेगवन्तः। मत्वर्थे इनृप्रत्ययः। तेषु मध्ये वाजिनं वेगवन्तम्। ते तुभ्यमारण्यं वनस्थं गौरं गौरवर्णं मृगं दिशामि ददामि तेन तन्वः चिन्वानो निषीदेति पूर्ववत्। ते तव शुग्गौरं गच्छतु॥ ४८॥

इमꣳ साहस्रꣳ शतधारमुत्सं व्यच्यमानꣳ सरिरस्य मध्ये। घृतं दुहानामदितिं जनायाग्ने मा हिꣳसीः परमे व्योमन्॥ गवयमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वो निषीद। गवयं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छतु॥ ४९॥

अथ गोः। अत्र विशेषणद्वयं स्त्रीलिङ्गं शेषाणि पुंलि-

ङ्गानि व्यत्ययेन उभाभ्यां गौरेव स्तूयते। हे अग्ने! परमे व्योमन् उत्कृष्टे स्थाने स्थितमिमं गोरूपं पशुं त्वं मा हिंसीः। कीदृशं साहस्रं सहस्रमूल्यार्हं सहस्रोपकारक्षमं वा। शतधारं शतसंख्याकक्षारधारायुतमत एवोत्सम् उत्सः कूपः तत्सदृशम् उत्स इवोत्सस्तं बहुस्रोतसमित्यर्थः। सरिरस्य मध्ये एषु लोकेष्वन्तः व्यच्यमानं जनैर्विविधमच्यमानमुपजीव्यमानम्। इमे वै लोकाः सरिरमिति [ ७, ५, २, ३४ ] श्रुतेः। जनाय सर्वलोकाय घृतं दुहानां घृतकारणं क्षीरं क्षरन्तीम्। अदितिमखण्डिताम्। ते तवारण्यं गवयं गोसदृशं पशुविशेषमनुदिशामि। गिष्टमुक्तम् ॥ ४९ ॥

इ॒मम् ऊर्णायुं वरुणस्य नाभिं त्वचं पशूनां द्वि॒पदां चतुष्पदाम्। त्वष्टुः प्र॒जानां प्रथ॒मं ज॒नित्र॒मग्ने मा हिंसीः पर॒मे व्योमन्॥ उष्ट्रमार॒ण्यमनु ते दिशामि तेन चिन्वानस्त॒न्वो निषीद। उष्ट्रं ते॒ शुगृच्छतु यं द्वि॒ष्मस्तं ते॒ शुगृच्छतु ॥ ५० ॥

अथाविः। हे अग्ने! परमे व्योमन् स्थाने स्थितमिममविं मा हिंसीः। कीदृगमूर्णायुमूर्णावन्तमूर्णाया युम्। वरुणस्य नाभिं नाभिस्थानीयं प्रियमपत्यमित्यर्थः। द्विपदां नराणां चतुष्पदां गवादीनामुभयरूपाणां पशूनां त्वचम् त्वचमिव त्वचम् त्वग्रक्षकं कम्बलैः छादकत्वात् मनुष्याः शीतनिवृत्त्यै कम्बलं दधते अश्वगोखराद्या अपि मार्दवाय पृष्ठे कम्बलैराच्छाद्यन्ते। तथा त्वष्टुः प्रजापतेः प्रजानां मध्ये प्रथमं जनित्रं प्रथमोत्पन्नम्। एतद्ध त्वष्टा प्रथमं रूपं विच-

कारेति [ ७, ५, २, ३५ ] श्रुतेः। उष्ट्रं प्रसिद्धं ते ददामि। स्पष्टमन्यत् ॥ ५० ॥

अजो ह्यग्नेरजनिष्ट शोकात्सो अपश्यज्जनितारमग्रे। तेन देवा देवतामग्रमायँस्तेन रोहमायन्नुप मेध्यासः॥ शरभमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वो निषीद। शरभं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छतु ॥ ५१ ॥

अथाजस्य। हि पादपूरणः। योऽजोऽग्नेः प्रजापतेः शोकात् सन्तापादजनिष्ट उत्पन्नः शोकाद्दीप्यमानादग्नेः प्रजापतेरजनिष्टेति वा। यद्वै प्रजापतेः शोकादजायत तदग्नेः शोकादजायतेति [ ७, ५, २, ३६ ] श्रुतेः। आत्मनो वपामुदखिदत्तामग्नौ प्रगृह्णात्ततोऽजस्तूपरः समभवदिति तैत्तिरीयेऽपि। स उत्पन्नोऽजोऽग्रे प्रथममुत्पन्नं नरमेव जनितारं स्वोत्पादकं प्रजापतिमपश्यद् दृष्टवान्। किञ्च एवं प्रशस्तोऽजस्ततो देवा इदानीन्तना अग्रं पूर्वजन्मनि तेनाजेन कर्म कृत्वेति शेषः देवतां देवभावमायन् प्राप्ताः तस्य भावस्त्वतलौ। किञ्च मेध्यासः मेध्या यज्ञयोग्या यजमाना रोहं रोहणीयं स्वर्गं तेनाजेनोपायन् उपगच्छन्ति। छन्दसि परेऽपि [ पा० १, ४, ८१ ]। शरभोऽष्टापदो मृगविशेषः सिंहघाती। शेषमुक्तम् ॥ ५१ ॥

त्वं यविष्ठ दाशुषो नॄः पाहि शृणुधी गिरः। रक्षा तोकमुत त्मना ॥ ५२ ॥

का० [ १७. ६, १ ] एत्य च त्वं यविष्ठेति चित्योपस्थानम्। बर्हिर्वेदेरागत्याग्निसमीपेऽर्धचित्यमुपतिष्ठते ॥ उशनोदृष्टानिरुक्ताग्नेयी गायत्री। हे यविष्ठ युवतम! यद्वा मिश्रयितृतम! गिरोऽस्मदीयाः स्तुतिवाचः शृणुधि शृणु श्रुशृणुपृकृवृभ्य इति [ पा० ६, ४, १०२ ] हेर्धिः अन्येषामपि दृश्यत इति [ पा० ६, ३, १३७ ] संहितायां दीर्घः। गिरः श्रुत्वा दाशुषो हविर्दत्तवतो यजमानान् नॄन् मनुष्यान् पाहि रक्ष दाशुष इति षष्ठी वा यजमानस्य नॄन् पाहीति। दाश्वान् साह्वान्मीढ्वाश्चेति [ पा० ६, १, १२ ] निपातः। किञ्च उतापि च त्मना आत्मना तोकं यजमानापत्यं रक्ष द्व्यचोऽतस्तिङ इति [ पा० ६, ३, १३५ ] संहितायां दीर्घः। मन्त्रेष्वाङ्यादेरात्मन इति [ पा० ६, ४, १४१ ] आकारलोपः। तोकमपत्यमुतात्मानं च रक्षेति विभक्तिव्यत्ययो वा ॥ ५२ ॥

अपां त्वेमन् सादयामि। अपां त्वोद्मन् सादयामि। अपां त्वा भस्मन् सादयामि। अपां त्वा ज्योतिषि सादयामि। अपां त्वायने सादयामि। अर्णवे त्वा सदने सादयामि। समुद्रे त्वा सदने सादयामि। सरिरे त्वा सदने सादयामि। अपां त्वा क्षये सादयामि। अपां त्वा सधिषि सादयामि। अपां त्वा सदने सादयामि। अपां त्वा सधस्थे सादयामि। अपां त्वा योनौ सादयामि। अपां त्वा पुरीषे सादयामि। अपां त्वा पाथसि सादयामि।

गायत्रेण त्वा छन्दसा सादयामि। त्रैष्टुभेन त्वा छन्दसा सादयामि। जागतेन त्वा छन्दसा सादयामि। आनुष्टुभेन त्वा छन्दसा सादयामि। पाङ्क्तेन त्वा छन्दसा सादयामि ॥५३॥

का० [ १७, ६, २ ] अपरेण स्वयमातृण्णामित्यापस्याः पञ्च पञ्चानूकान्तेष्वपां त्वेमन्निति प्रतिमन्त्रम्। तीर्थेनाग्निमाक्रम्य स्वयमातृण्णामपरेण पूर्वानूकान्तमेत्य चतुर्ष्वप्यनूकान्तेष्वपां त्वेमन्निति प्रतिमन्त्रं पञ्चपञ्चापस्यासंज्ञा इष्टका उपदधातीति सूत्रार्थः॥ विंशतिरिष्टकादेवत्यानि यजूंषि पञ्चपञ्चापस्यादेवत्यानि पञ्च छन्दस्यादेवत्यानि। हे इष्टके अपस्ये ! अपामेमन् एमनि वायौ त्वा त्वां सादयामि स्थापयामि। इण् गतौ मनिन्प्रत्ययः सप्तम्या लुक्। त्वा इत्यस्य पररूपम् [ पा० ६, १, ८४ वा ६ ] अत्रापामेमन्नित्यादीनां श्रुत्यान्तोऽर्थो ग्राह्यः। वायुर्वा अपामेम वायौ त्वा सादयामीति [ ७, ५, २, ४६ ] श्रुतेः॥ अपामोद्मन् आद्मनि ओषधिषु त्वां सादयामि॰। उन्दी क्लेदे मन्नलोपश्च गुणः सप्तम्या लुक्। ओषधयो वा अपामोद्म [ ७, ५, २, ४७ ] एवमग्रेऽपि तुल्यम्॥ भस्मन् भस्मनि भस भर्त्सनदीप्त्याः मन्। अभ्रे अभ्रं वा अपां भस्म [ ७, ५, २, ४८ ]॥ अपां ज्योतिषि विद्युति। विद्युद्वा अपां ज्योतिः [ ७, ५, २, ४९ ]॥ अपामयने भूमौ। इयं पृथिव्यपामयनम् [ ७, ५, २, ५० ]॥ अर्णवे सदने स्थाने प्राणरूपे सा०। प्राणो वा अर्णवः [ ७, ५, २, ५१ ]॥ समुद्रे सदनं सा०। मनो वै समुद्रः [ ७, ५, २, ५२ ] सरिरे सदने वाचि सा०। वाग्वै सरिरम् [ ७, ५, २, ५३ ]॥ अपां क्षये

चक्षुषि त्वां सा० । चक्षुर्वा अपां अयो निवासः [ ७, ५, २, ५४ ]॥ अपां सधिषि श्रोत्रे त्वां सा० । श्रोत्रं वा अपाꣳ सधिः [ ७, ५, २, ५५ ]॥ अपां सदने दिवि त्वां सा० । द्यौर्वा अपाꣳ सदनम् [ ७, ५, २, ५६ ]॥ अपां सधस्थे अन्तरिक्षे त्वां सा० । अन्तरिक्षं वा अपाꣳ सधस्थम् [ ७, ५, २, ५७ ]॥ अपां योनौ समुद्रे त्वां सा० । समुद्रो वा अपां योनिः [ ७, ५, २, ५८ ]॥ अपां पुरीषे सिकतासु त्वां सा० । सिकता वा अपां पुरीषम् [ ७, ५, २, ५९ ]॥ अपां पाथसि अन्ने त्वां सा० । अन्नं वा अपां पाथः [ ७, ५, २, ६० ]॥ पञ्च छन्दस्या उपदधाति पञ्चयजुर्भिः । गायत्रेण गायत्र एव गायत्रं तेन छन्दसा त्वामुपदधामि । त्रैष्टुभेन छन्दसा त्वां सा० । जागतेन छन्दसा त्वां सा० । आनुष्टुभेन छन्दसा त्वां सा० । पाङ्क्तेन छन्दसा त्वां सा० ॥ ५३ ॥

अयं पुरो भुवः । तस्य प्राणो भौवायनः । वसन्तः प्राणायनः । गायत्री वासन्ती । गायत्र्यै गायत्रम् । गायत्रादुपांशुः । उपांशोस्त्रिवृत् । त्रिवृतो रथन्तरम् । वसिष्ठ ऋषिः । प्रजापतिगृहीतया त्वया प्राणं गृह्णामि प्रजाभ्यः ॥ ५४ ॥

का० [ १७, ६, ३ ] व्याघारणवत्प्राणभृतः कर्णसहिता दश-दशायं पुर इति प्रतिमन्त्रम् । प्राणभृत्संज्ञा इष्टका व्याघारणवद्दक्षिणे अंसे उत्तरश्रेण्यां दक्षिणश्रोण्यामुत्तरे अंसे कर्णसहिता अस्याया संलग्नाः स्वयमातृण्णापर्यन्तं दश दशोपदधातीति सूत्रार्थः ॥ पञ्चाग्रयजूंषि प्राणभृदिष्टका

देवत्यानि प्रतिकण्डिकं दश-दश। प्रथमं दशकं दक्षिणे ऽंसे। कदाचिदशनात् प्रजापतेः प्राणा देवा भूलोकोत्क्रान्ताः तदा तान् प्रजापतिरूचे किमित्युत्क्रम्यते मामुपगच्छतेति ततः प्राणास्तमूचुर्वयमन्नं विना स्थातुं न शक्नुमस्तदन्नं त्वया सृज्यते चेत्तिष्ठामस्ततः प्रजापतिनोक्तं वयमुभयेऽन्नं सृजामेति तथेत्युक्त्वा प्राणाः प्रजापतिश्चैतदन्नमसृजंस्तेन प्राणान् पृणात्योति इष्टकानां प्राणभृत्संज्ञेत्युक्तं श्रुत्या प्रजापतेर्विस्रस्तात् प्राणा उदक्रामन्नित्यादिकया [८, १, १, ३]। अथ मन्त्रव्याख्या। योऽयं पुरो भुवस्थाग्निर्वर्त्तते हे इष्टके! त्वं तद्रूपासि प्राण एवाग्निर्भूत्वा पुरस्तिष्ठति अतोऽग्निरूपां त्वामुपदधामीति शेषः एवमग्रेऽपि। पुरस्तादुपधीयते प्रागुद्ध्रियेत प्राङुपचर्यत इति पुरोऽग्निः। भवति सर्वरूपेणेति भवत्यस्मात् सर्वमिति वा भुवोऽग्निः तद्रूपेष्टका ध्येयेति भावः। तदुक्तं श्रुत्या [८, १, १, ४] अयं पुरो भुव इत्यग्निर्वै पुरस्तात्तस्माह पुर इति प्राञ्चꣳ ह्यग्निमुद्धरन्ति प्राञ्चमुपचरन्त्यथ यद्भुव इत्याहाग्निर्वै भुवोऽग्नेर्हीदꣳ सर्वं भवति प्राणो ह्यग्निर्भूत्वा पुरस्तात्तस्थौ तदेव तद्रूपमुपदधातीति॥ प्राणस्तस्याग्नेरपत्यमिति शेषः अतएव भौवायनः भुवस्याग्नेरपत्यं भौवायनः। नडादित्वात् फक्। इष्टके! प्राणरूपां त्वां सा०। प्राणं तस्माद्रूपादग्नेर्निरमिमीतेति [८, १, १, ५] श्रुतेः॥ प्राणस्यापत्यं प्राणायनः फक् यो वसन्त ऋतुस्तद्रूपां सा०। वसन्तमृतुं प्राणान्निरमिमीतेति [८, १, १, ५] श्रुतेः॥ वसन्तस्यापत्यं वासन्ती तस्यापत्यमिति [पा० ४, १, ९२] अण् टिड्ढाणञित्यादिना [पा० ४, १, १५] ङीप्। या गायत्री छन्दस्तद्रूपां सा०। गायत्रीं छन्दो वसन्तादृतोर्निरमिमीतेति [८, १, १, ५] श्रुतेः॥ गायत्र्या गायत्रं चतुर्थी पञ्चम्यर्थे

गायत्र्याः सकाशाज्जायत्रं सामोत्पन्नं तद्रूपां सा०। गायत्र्यै छन्दसो गायत्रꣳ साम निरमिमीतेति [ ८, १, १, ५ ] श्रुतेः॥ गायत्रात्साम्नो य उपांशुग्रहो निर्मितस्तद्रूपां सा०। गायत्रात्साम्न उपाꣳशुं ग्रहं निरमिमीतेति [ ८, १, १, ५ ] श्रुतेः॥ उपांशुग्रहान्निर्मितो यस्त्रिवृत्स्तोमस्तद्रूपां सा०। उपाꣳशोर्ग्रहात्त्रिवृतꣳ स्तोमं निरमिमीतेति [ ८, १, १, ५ ] श्रुतेः॥ त्रिवृतः स्तोमान्निर्मितं यद्रथन्तरं पृष्ठं तद्रूपां सा०। त्रिवृतः स्तोमाद्रथन्तरं पृष्ठं निरमिमीतेति [ ८, १, १, ५ ] श्रुतेः॥ वसत्यधितिष्ठति सर्वजन्तूनिति वस्ता अतिशयेन वस्ता वसिष्ठः तुरिष्ठेमेयःस्विति [पा० ६, ४, १५४ ] इष्ठनि तृचो लोपः सर्वाधार ऋषिः ज्ञाता प्राणस्तद्रूपां सा०। प्राणो वै वसिष्ठ ऋषिर्यद्वै नु श्रेष्ठस्तेन वसिष्ठोऽथो यद्वस्तृतमो वसति तेनो एव वसिष्ठ इति [ ८, १, १, ६ ] श्रुतेः॥ प्रजापतिगृहीतया गृह्णातिः स्त्यर्थः प्रजापतिना सृष्टया त्वदिष्टकया स्थापितया प्रजाभ्यः सर्वप्रजार्थं प्राणं गृह्णामि प्रजानां प्राणसिद्धैः त्वामुपदधामीत्यर्थः। अयं पुर इत्यादिदशमन्त्रैः प्राणमेवैकं प्रजाभ्यः गृह्णाति। ये नानाकामाः प्राणे तांस्तद्दधाति सकृत् सादयत्येकं तत्प्राणं करोतीति [ ८, १, १, ६ ] श्रुतेः॥ ५४॥

अ॒यं द॑क्षि॒णा वि॒श्वक॑र्मा। तस्य॒ मनो॑ वैश्वकर्म॒णम्। ग्री॒ष्मो मा॑न॒सः। त्रि॒ष्टुब्ग्रै॒ष्मी॑। त्रि॒ष्टुभः॑ स्वा॒रम्। स्वा॒राद॑न्तर्या॒मः। अ॒न्त॒र्या॒मात् प॑ञ्चद॒शः। प॒ञ्च॒द॒शाद् बृ॒हत्। भ॒रद्वा॑ज॒ ऋषिः॑। प्र॒जाप॑तिगृहीतया॒ त्वया॒ मनो॑ गृह्णामि प्र॒जाभ्यः॑॥ ५५॥

एभिर्मन्त्रैस्तृतीयं दशकं दक्षिणश्रोणेरारभ्योपधेयम्। विश्वं करोति सर्वं सृजतीति विश्वकर्मा वायुरयं दक्षिणा दक्षिणस्यां दिशि आर्यावर्ताद्भूयो वाति तद्रूपां त्वां सा०। अयं वै वायुर्विश्वकर्मा योऽयं पवते एष हीदꣳ सर्वं करोति। तद्यत्तमाह दक्षिणेति तस्मादेष दक्षिणैव भूयिष्ठं वाति तद्रूपमुपदधातीति [८, १, १, ७, श्रुतेः॥ तस्य विश्वकर्मणोऽपत्यं मनोऽत एव वैश्वकर्मणं विश्वकर्मण इदम्। तस्येदमिति [पा० ४, ३, १२०] अण् इन्नण्यनपत्य इति [पा० ६, ४, १६४] प्रकृत्या। मनोरूपां सा०। मनस्तस्माद्रूपाद्वायोर्निरमिमीतेति [८, १, १, ८] श्रुतेः॥ मनसोऽपत्यं ग्रीष्म-ऋतुस्तद्रूपां सा०। ग्रीष्मऋतुं मनसो निरमिमीतेति [८, १, १, ८] श्रुतेः॥ ग्रीष्मस्येयं ग्रैष्मी ग्रीष्मोत्पन्ना त्रिष्टुप् छन्दस्तद्रूपां सा। त्रिष्टुभं छन्दो ग्रीष्मात्ततोनिरमिमीतेति [८, १, १, ८] श्रुतेः॥ त्रिष्टुभ उत्पन्नं यत् स्वारं साम तद्रूपां सा०। त्रिष्टुभश्छन्दसः स्वारꣳ साम निरमिमीतेति [८, १, १, ८] श्रुतेः॥ स्वरात् साम्न उत्पन्नो योऽन्तर्यामो ग्रहस्तद्रूपां सा०। स्वारात् साम्नोऽन्तर्यामं ग्रहं निरमिमीतेति [८, १, १, ८] श्रुतेः॥ अन्तर्यामादुत्पन्नो यः पञ्चदश स्तोमस्तद्रूपां सा०। अन्तर्यामाद् ग्रहात् पञ्चदशꣳस्तोमं निरमिमीतेति [८, १, १, ८] श्रुतेः॥ पञ्चदशात् स्तोमादुत्पन्नं यद् बृहत् पृष्ठं तद्रूपां सा०। पञ्चदशात् स्तोमाद् बृहत्पृष्ठं निर० [८, १, १, ८]॥ भरद्वाज ऋषिः बिभर्तीति भरन् वाजमन्नं यः स भरद्वाजोऽन्नधर्त्ता मनः मनसि स्वस्थे भक्षादनेच्छोत्पत्तेः ऋषिः सचेतनो मनोरूपस्तद्रूपां सा०। मनो वै भरद्वाज ऋषिः अन्नं वाजो यो वै मनो बिभर्त्ति सोऽन्नं वाजं भरति तस्मान्मनो भरद्वाज ऋषिरिति [८, १, १, ९] श्रुतेः॥ प्रजा-

पतिगृहीतया धात्रुष्टया त्वयेष्टकया कृत्वा प्रजाभ्यो मनो गृह्णामि एभिरिदंममन्त्रैर्मन एव गृह्णामीत्यर्थः ॥ ५५ ॥

अ॒यं प॒श्चाद् वि॒श्वव्य॑चा: । तस्य॒ चक्षु॑र्वैश्वव्य॒चसम् । व॒र्षाश्चा॑क्षु॒ष्या॑: । जग॑ती वा॒र्षी । जग॑त्या॒ ऋक्स॑मम् । ऋक्स॑मा॒च्छु॒क्र: । शु॒क्रात्स॑प्त॒द॒श: । स॒प्त॒द॒शाद्वै॑रू॒पम् । ज॒मद॑ग्नि॒ॠर्षि॑: । प्र॒जाप॑तिगृहीतया॒ त्वया॒ चक्षु॑र्गृह्णामि प्र॒जाभ्य॑: ॥ ५६ ॥

अयं पश्चादित्यादिमन्त्रैर्द्वितीयं दशकमुत्तरस्यां श्रोणेरारभ्योपदधाति। पश्चात् प्रतीचीं दिशमञ्चति गच्छतीति पश्चात् प्रतीचागमनशीलो विश्वं विचति उदितः सन् प्रकाशयतीति विश्वाव्यचा आदित्योऽयं प्रसिद्धस्तद्रूपां मा०। असौ वा आदित्यो विश्वव्यचा यदा ह्येवैष उदेत्यथेदꣳ सर्वं व्यचो भवति तद्यत्तमाह पश्चादिति तस्मादेतं प्रत्यञ्चमेव यन्तं पश्यन्तीति [ ८, १, २, १ ] श्रुतेः ॥ तस्यादित्यस्य सम्बन्धि चक्षुरत एव वैश्वव्यचसं विश्वव्यचसो रवेरुत्पन्नं तद्रूपां मा०,। चक्षुस्तस्माद्रूपादादित्यान्निरमिमीतेति [ ८, १, २, २ ] श्रुतेः ॥ चाक्षुष्यः चक्षुष उत्पन्नः वर्षा ऋतुस्तद्रूपां मा०। गर्गादित्वाद्यञ् वर्षा ऋतुं चक्षुषो निरमिमीतेति [ ८, १, २, २ ] श्रुतेः ॥ वर्षाभ्य उत्पन्नं जगतीच्छन्दस्तद्रूपां मा०। जगतीं छन्दो वर्षाभ्य ऋतोर्निरमि० ॥ जगतीच्छन्दस उत्पन्नमृक्समसंज्ञं यत्साम तद्रूपां मा०। जगत्यै छन्दस ऋक्समꣳ साम निरमि० ॥ ऋक्समादुत्पन्नो यः शुक्रग्रहस्तद्रूपां मा०। ऋक्समात्साम्नः शुक्रं ग्रहं निरमि० ॥ शुक्रादुत्पन्नो यः

सप्तदश स्तोमस्तद्रूपां त्वां मा०। शुक्राद् ग्रहात्सप्तदशꣳ स्तोमं निरमि०॥ सप्तदशात् स्तोमादुत्पन्नं यद्वै रूपं पृष्ठं तद्रूपां मा०। सप्तदशात् स्तोमाद्वैरूपं पृष्ठं निरमि०॥ जमदग्निर्ऋषिः जमति जगत् पश्यतीति जमन् अङ्गति सर्वत्र गच्छतीत्यग्निः ऋषति जानाति ऋषिः ईदृशं यच्चक्षुस्तद्रूपां मा०। चक्षुर्वै जमदग्निर्ऋषिर्यदनेन जगत् पश्यत्यथो मनुते तस्माच्चक्षुर्जमदग्निर्ऋषिरिति [ ८, १, २, ३ ] श्रुतेः॥ प्रजापतिसृष्टया त्वयेष्टकया प्रजार्थं चक्षुर्गृह्णामि दशमन्त्रैश्चक्षुरेव गृह्णामि। सर्वस्मादयत्येतच्चक्षुः करोतीति [ ८, १, २, ३ ] श्रुतेः॥ ५६॥

इ॒दमु॑त्त॒रात् स्वः॑। तस्य॒ श्रोत्रꣳ॑ सौ॒वम्। श॒रच्छ्रौ॒त्री। अ॒नु॒ष्टुप् श॑र॒दः। अ॒नु॒ष्टुभ॑ ऐ॒डम्। ऐ॒डान्म॒न्थी। म॒न्थिन॑ एकवि॒ꣳशः। ए॒क॒वि॒ꣳशाद्वै॑रा॒जम्। वि॒श्वामि॑त्र॒ ऋषिः॑। प्र॒जाप॑तिगृहीतया त्वया॒ श्रोत्रं॑ गृह्णामि प्र॒जाभ्यः॑ ॥५७॥

दशमन्त्रैस्तुर्यं दशकमुत्तरांसादारभ्योपदधाति॥ उत्तरस्यामुत्तरात् उत्तराधरदक्षिणादातिरिति [ पा० ५, ३, ३४ ] आत्प्रत्ययः सर्वस्मादुत्तरभागस्था दिशः यदिदं स्वः स्वर्गो लोकः तां दिक्स्वर्गरूपां त्वां मा०। क्रियाव्ययविशेषणानां नपुंसकत्वमेकत्वं चेति वचनादिदमुत्तरादित्युक्तम्। दिशो वा उत्तरात्तदयत्ता प्राहोत्तरादित्युत्तरा ह्यस्मात्सर्वस्माद्दिशोऽथ यत् स्वरित्याह स्वर्गो हि लोको दिशः श्रोत्रꣳ ह दिशो भूत्वा-श्वरं तस्थौ तदेतद्रूपमुपदधातीति [ ८, १, २, ४ ] श्रुतेः॥ तस्य स्वर्गस्य सम्बन्धि श्रोत्रं कीदृशं सौवम् स्वः इदं सौवं तस्ये-

टमिति [ पा० ४, ३, १२० ] अण् द्वारादित्वादैचागमः [ पा० ७, ३, ४ ] अव्ययानां भमात्रे टिलोपः श्रोत्ररूपां त्वां सा० । श्रोत्रं तस्माद्रूपाद्दिग्भ्यो निरमिमीतेति [ ८, १, २, ५ ] श्रुतेः ॥ श्रोत्रादुत्पन्ना या शरत्तद्रूपां सा० । शरदमृतुꣳ श्रोत्रान्निरमिमीतेति [ ८, १, २, ५ ] श्रुतेः ॥ शरद उत्पन्नं यदनुष्टुप्छन्दस्तद्रूपां सा० । अनुष्टुभं छन्दः शरद ऋतोर्निरमि० ॥ अनुष्टुभ उत्पन्नं यदैडं साम तद्रूपां सा० । अनुष्टुभश्छन्दस ऐडꣳ साम निरमि० ॥ ऐडात् साम्न उत्पन्नो यो मन्थी ग्रहस्तद्रूपां सा० । ऐडात् साम्नो मन्थिनं ग्रहं निरमि० ॥ मन्थिग्रहादुत्पन्ना य एकविंश स्तोमस्तद्रूपां सा० । मन्थिनो ग्रहादेकविंशꣳ स्तोमं निरमि० । एकविंशस्तोमादुत्पन्नं यद्वैराजं पृष्ठं तद्रूपां सा० । एकविꣳशात् स्तोमाद्वैराजं पृष्ठं निरमि० ॥ विश्वामित्र ऋषिः विश्वं सर्वं मित्रं येन मित्रे चर्षाविति [ पा० ६, ३, १३० ] दीर्घः तादृश ऋषिः श्रोत्रं शब्दयान्यवाक्यश्रवणात्सर्वमित्रं भवति विश्वामित्रर्षिरूपं यत् श्रोत्रं तद्रूपां सा० । श्रोत्रं वै विश्वामित्र ऋषिर्यदेनेन सर्वतः शृणोत्यथो यदस्मै सर्वतो मित्रं भवति तस्माच्छ्रोत्रं विश्वामित्र ऋषिरिति [ ८, १, २, ६ ] श्रुतेः प्रजापतिसृष्ट्या त्वयेष्टकया प्रजाभ्यः श्रोत्रं गृह्णामीति दंशमन्त्रः श्रोत्रमेव सादयति ये नानाकामाः श्रोत्रे तां स्तद्दधाति सकृत्सादयत्येकं तच्छ्रोत्रं करोतीति [ ८, १, २, ६ ] श्रुतेः ५७ ॥

इ॒यमु॒परि॑ म॒तिः । तस्यै॒ वाङ्मा॒त्या । हे॒म॒न्तो वा॒च्यः । प॒ङ्क्तिर्हैं॑ म॒न्ती । प॒ङ्क्त्यै नि॒धन॑वत् । नि॒धन॑वत आग्र॒यणः । आ॒ग्र॒य॒णात्त्रि॑णवत्रयस्त्रि॒ꣳशौ । त्रि॒ण॒वत्र॒य॒स्त्रि॒ꣳशाभ्या॑ꣳ

शाक्वररैवते। विश्वकर्म ऋषिः। प्रजापतिगृहीतया त्वया वाचं गृह्णामि प्रजाभ्यः। लोकं पृण छिद्रं पृणाथो सीद ध्रुवा त्वम्। इन्द्राग्नी त्वा बृहस्पतिरस्मिन्योनावसीषदन्। ता अस्य सूद दोहसः सोमꣳ श्रीणन्ति पृश्नयः। जन्मन् देवानां विशस्त्रिष्वा रोचने दिवः। इन्द्रं विश्वा अवीवृधत् समुद्रव्यचसं गिरः। रथीतमꣳ रथीनां वाजानाꣳ सत्पतिम्पतिम् ॥५८॥

इति माध्यन्दिनीयायां वाजसनेयिसंहितायां त्रयोदशोऽध्यायः ॥ १३ ॥

दशमन्त्रैः पञ्चमं दशकं रेतःसिग्भ्यामुत्तरां प्रथमां कृत्वा प्रादक्षिण्येनोपधेयम्। उपर्युपरिष्टादिति [ पा० ५, ३, ३१ ] निपातः उपरि ऊर्ध्वदेशस्थचन्द्र इयं मतिः वाक् मन्यते ज्ञायते ययां सा मतिः वागेव चन्द्रो भूत्वोपरि यस्तिष्ठति तद्रूपां सा०। चन्द्रमा वा उपरि तद्यत्तमाहोपरीत्युपरि हि चन्द्रमा अथ यन्मतिरित्याह वाग्वै मतिर्वाचा हीदꣳ सर्वं मनुते वाग्घ चन्द्रमा भूत्वोपरिष्टात्तस्थौ तदेव तद्रूपमुपदधातीति [ ८, १. ८, ७ ] श्रुतेः॥ तस्यै चन्द्ररूपायास्तस्या मतेरुत्पन्नात् एव मात्या मतेरियं मात्या या वाक् तद्रूपां सा०। वाचं तस्माद्रूपाच्चन्द्रमसो निरमिमीतेति [ ८, १, २, ८ ] श्रुतेः॥ वाचोऽपत्यं वाच्यः वाच उत्पन्नो यो हेमन्तस्तद्रूपां सा०। हेमन्तमृतुं वाचो निरमि०॥ हेमन्तस्येयं हैमन्ती या पङ्क्तिश्छन्दस्तद्रूपां सा०। पङ्क्तिं छन्दो हेमन्तादृतोर्निरमि०॥

पङ्क्तेरुत्पन्नं यन्निधनवत्संज्ञं साम तद्रूपां सा०। पङ्क्त्येति चतुर्थी पञ्चम्यर्थे। पङ्क्त्या छन्दसा निधनवत्साम निरमि०॥ निधनवतः साम्न उत्पन्ना य आग्रयणो ग्रहस्तद्रूपां सा०॥ निधनवतः साम्न आग्रयणं ग्रहं निरमि०॥ आग्रयणादुत्पन्नौ यौ त्रिणवत्रयस्त्रिंशौ द्वौ स्तोमौ तद्रूपां सा०। आग्रयणाद् ग्रहात्त्रिणवत्रयस्त्रिꣳशौ स्तोमौ निरमि०॥ त्रिणवत्रयस्त्रिंशाभ्यामुत्पन्ने ये द्वे शाक्वररैवते पृष्ठे त्वां तद्रूपां सा०। त्रिणवत्रयस्त्रिꣳशाभ्याꣳ स्तोमाभ्याꣳ शाक्वररैवते पृष्ठे निरमि०॥ विश्वकर्मा विश्वं सर्वं करोतीति विश्वकर्मा ऋषिः वागेव वाचा हि सर्वं कुरुते वाग्रूपां त्वां सा०। वाग्वै विश्वकर्मर्षिर्वाचा हीदꣳ सर्वं कृतं तस्माद्वाग्विश्वकर्मर्षिरिति [ ८, १, २, ९, ] श्रुतेः॥ प्रजापतिसृष्टया त्वयेष्टकया प्रजाभ्यः वाचं गृह्णामि एभिर्दशमन्त्रैर्वाचमेव गृह्णाति। सकलसादयत्येकां तद्वाचं करोतीति [ ८, १, २, ९ ] श्रुतेः॥ अथ पञ्चकण्डिकासु प्राणमनश्चक्षुःश्रोत्रवाचां प्रजाभ्यो ग्रहणमित्यस्यार्थद्वयम्। प्रजाभ्य इति चतुर्थीपक्षे प्रजार्थं प्राणादीनां ग्रहणं पञ्चाग्रदिष्टकास्थापने प्रजानां यजमानापत्यपश्वादीनां प्राणादयः पुष्टा भवन्त्वित्यर्थः। प्रजाभ्य इति पञ्चमीपक्षे प्रजाभ्यो नानालोकेभ्यः सकाशात् प्राणादीन् गृह्णामि सहभागान् करोमीति प्राणभृतामुपधानेन सर्वाः प्रजा सहभागा भवन्त्वित्यर्थः॥ का० [ १७, ६, ५ ] लोकम्पृणा दक्षिणाꣳसादध्या मध्यात्। आत्मनो दक्षिणꣳसाद्वारभ्या मध्यात् अधि स्वयमातृण्णायाः अन्तं लोकम्पृणा उपदधाति ताम् लोकं पृणेत्यभिमन्त्रणम्। ता अस्येति सूददोहःसंज्ञमन्त्रेणाधिवदनम् स्पृष्ट्वा पठनमिति सूत्रार्थः॥ का० [ १७, ६, ८ ] मध्ये पुरीषं निवपति पूर्ववत्। स्वयमातृण्णोपरीष्टं विश्वेति मन्त्रेण मृत्-

क्षेपः। तिस्रः ऋचः प्रतीकोक्ताः पूर्वमुक्तत्वात् [ १२ अ० ५४—५५—५६ क० ] ॥ ५८ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे।
पुष्करायादि चित्यन्तो रामेन्द्वध्याय ईरितः ॥ १३ ॥

---

## चतुर्दशोऽध्यायः।

ध्रुवक्षितिर्ध्रुवयोनिर्ध्रुवासि ध्रुवं योनिमासीद साधुया। उख्यस्य केतुं प्रथमं जुषाणा। अश्विनाध्वर्यू सादयतामिह त्वा ॥ १ ॥

त्रयोदशेऽध्याये प्रथमा चितिरुक्ता सा भूलोकरूपा। अयं वै लोकः प्रथमा चितिरिति [ ८, २, १, १ ] श्रुतेः। चतुर्दशेऽध्याये द्वितीयादिचितित्रयं वक्ष्यते भूमेरूर्ध्वमन्तरिक्षादर्वाग्भागो द्वितीया चितिः। एतां द्वितीयां चितिमपश्यन् यदूर्ध्वं पृथिव्या अर्वाचीनमन्तरिक्षात्तेषामेष लोकः इति [ ८, २, १, २, ] श्रुतेः। देवैरश्विनौ प्रार्थितौ युवां भिषजौ ततो द्वितीयां चितिमुपधत्तमिति ताभ्यामुक्तं चित्युपधाने किमावयोः फलमिति देवैरुक्तं युवां चित्युपधाने देवानामध्वर्यू भविष्यथ इति ततस्ताभ्यां द्वितीया चितिरुपहितेति श्रुत्या तेऽश्विनावब्रुवन्नित्यादिकयोक्तम् [ ८, २, १, ३ ]। तत्रादौ पञ्चाश्विन्य इष्टकाः॥ द्वितीयचितिमन्त्रा देवदेवत्याः॥ का० [ १७, ८, १५ ] आश्विनीर्ध्रुवक्षितिरिति प्रतिमन्त्रम्। पञ्चकक्षिकाभिराश्विनीसंज्ञा इष्टका रेतःसिग्वेलायामुपदधाति प्रतीष्टकं नित्यं इति सूत्रार्थः॥ पञ्चाश्विनीदेवत्याः प्रथमा विराट् चतस्रस्त्रिष्टुभो यजुरन्ताः। अश्विनावध्वर्यू इत्यादि

यजुः। आदित्यास्त्वार्षी त्रिष्टुबेकाधिका पादानियमात्। हे इष्टके! यतस्त्वं ध्रुवा स्थिरासि अतो ध्रुवं स्थिरं योनिं स्थानं रेतःसिग्वेलालक्षणमासीद अधितिष्ठ। कीदृशं साधुया साधु श्रेष्ठं सुपां सुलुगित्यमो यादेशः। कीदृशी त्वं ध्रुवक्षितिः ध्रुवा स्थिरा क्षितिर्निवासो यस्याः सा। ध्रुवा अचला योनिः कारणं यस्याः सा। तथा उख्यस्याग्नेः प्रथममाद्यं केतुं स्थानं प्रथमचितिरूपं जुषाणा सेवमाना। अथ वा अग्निरुख्यस्तस्यैष प्रथमः केतुर्यत् प्रथमा चितिस्तां जुषाणेति [ ८, २, १, ४ ] श्रुतेः॥ इतः परं यजुः किञ्च अश्विना देवानामध्वर्यू इह रेतःसिग्वेलायां हे इष्टके! त्वा त्वां सादयतामुपधत्ताम्। केचिदिदं यजुश्चतुर्थपादेन परिकल्प्य त्रिष्टुभं वदन्ति॥ १॥

कुलायिनी घृतवती पुरंधिः स्योने सीद सदने पृथिव्याः। अभि त्वा रुद्रा वसवो गृणन्त्विमा ब्रह्म पीपिहि सौभगाय॥ अश्विनाध्वर्यू सादयतामिह त्वा॥ २॥

हे इष्टके! पृथिव्याः सदने प्रथमचितिरूपे स्योने स्थाने सुखरूपे त्वं सीद तिष्ठ। पृथिवी वै प्रथमा चितिस्तस्यै शिवे स्योने सीद सदने इति [ ८, २, १, ५ ] श्रुतेः। कीदृशी त्वं कुलायिनी कुलायो नीडमस्त्यस्याम् कुलायो नीडं गृहमस्या अस्तीति गृहाकारा। रेतःसिग्वेलायामिष्टकोपचिता सा गृहाकारा भवति। कुलायमिव वै द्वितीया चितिरिति [ ८, २, १, ५ ] श्रुतेः। अत्र सादृश्यार्थे इनिः। तथा घृतवती होष्यमाणाज्ययुता वसोर्धारा घृत होष्यन्ते। पुरंधिः पुरं बहु इष्टकाजातं दधातीति पुरु बहुधा धीयते स्थाप्यत

इति वा। किञ्च रुद्रा वसवश्चोपलक्षणं सर्वे देवाः त्वा त्वामभिगृणन्तु स्तुवन्तु। किञ्च सौभगाय ऐश्वर्याय इमा इमानि ब्रह्म ब्रह्माणि मन्त्रान् पीपिहि आप्यायस्व मन्त्रान् प्राप्नुहि अस्मन्मन्त्रोपहिता सौभाग्याय भवेति भावः। इमेति सुप आकारः। ब्रह्मेति सुपो लोपः। पि गतौ तुदादिः बहुलं छन्दसीति [ पा० २, ४, ७६ ] शपः श्लुः श्लाविति [ पा० ६, १, १० ] द्वित्वं तुजादीनां दीर्घोऽभ्यासस्येति [ पा० ६, १, ७ ] अभ्यासदीर्घः॥ अश्विनेत्यादि पूर्ववत्॥ २॥

स्वैर्दक्षैर्दक्षपितेह सीद देवानां सुम्ने बृहते रणाय। पितेवैधि सूनव आ सुशेवा स्वावेशा तन्वा संविशस्व॥ अश्विनाध्वर्यू सादयतामिह त्वा॥ ३॥

हे इष्टके! त्वमिह द्वितीयायां चितौ सीद तिष्ठ स्वैर्दक्षैः वीर्यैः सामर्थ्यैः सह दक्षशब्दोऽत्र वीर्यार्थः। स्वेन वीर्येणेह सीदेति [ ८, २, १, ६ ] श्रुतेः। कीदृशी दक्षपिता दक्षं वीर्यं पातीति वीर्यस्य पालयित्री। किमर्थं स्थातव्यं तत्राह रणाय रमणीयाय बृहते सुम्ने सुम्नाय सुखाय सप्तमी चतुर्थ्यर्थे। देवानां सुम्नाय महते रणायेति [ ८, २, १, ६, ] श्रुतेः। देवाः सुखिनो भवन्त्विति तिष्ठेत्यर्थः। किञ्च आ समन्ताद्भावेन सुशेवा शोभनं शेवं सुखं यस्यास्तादृशी सर्वदा सुखयित्री एधि भव घ्वसोरेद्धाविति [ पा० ६, ४, ११९ ] एकारः। तत्र दृष्टान्तः पिता सूनव इव यथा पिता जनकः सूनवे पुत्राय सुशेवः सुखयिता भवति तद्वत्। किञ्च स्वावेशा सुखेनाविशतीति स्वावेशा प्रथमा तृतीयार्थे स्वावेशया सुख-

प्रवेशवत्या तन्वा शरीरेण संविशस्व अवस्थानं कुरु। स्वावेशेनात्मना संविशस्वेति [ ८, २, १, ६ ] श्रुतेः॥ अग्निनेत्युक्तम्॥ ३॥

पृथिव्याः पुरीषमस्यप्सो नाम तां त्वा विश्वे अभिगृणन्तु देवाः। स्तोमपृष्ठा घृतवतीह सीद प्रजावदस्मे द्रविणायजस्व॥ अग्निनाध्वर्यू सादयतामिह त्वा॥ ४॥

हे इष्टके! त्वं पृथिव्याः प्रथमचितेः पुरीषं पूरकं वस्त्वसि। पृथिवी वै प्रथमां चितिस्तस्या एतत्पुरीषमिव यद् द्वितीयेति [ ८, २, १, ७ ] श्रुतेः। पृणाति पूरयति पुरीषम्। शृपृभ्यां किदिति [ उणा० ४, २७ ] पृणातेरीषन्प्रत्ययः किच्च कित्त्वादुदोष्ठ्यपूर्वस्येति [ पा० ७, १, १०२ ] उदादेशो रपरत्वं च नित्त्वादाद्युदात्तः। अपः सनोति ददातीत्यप्सो नामापां कारणीभूतो रसश्च त्वमसि। तां तादृशीं प्रथमचितिपूरिकां जलदरसभूतां त्वा त्वां विश्वे सर्वे देवा अभिगृणन्तु सर्वतः स्तुवन्तु। किञ्च स्तोमपृष्ठाः स्तोमास्त्रिवृदादयः पृष्ठानि रथन्तरादीनि पठ्यमानानि यस्यां सा; तादृशी स्तोमपृष्ठवती। घृतवती ह्याज्यमानाज्ययुता सतीह द्वितीयचितौ सीद तिष्ठ। ततः प्रजावत् पुत्रपौत्रादिप्रजायुक्तं द्रविणा द्रविणं धनमस्मे अस्मभ्यमायजस्व समन्ताद् देहि यजतिरिह दानार्थः। अस्मे इति सुपां सुलुगिति विभक्तेः शेआदेशः॥ व्याख्यातमन्यत्॥ ४॥

आदित्यास्त्वा पृष्ठे सादयाम्यन्तरिक्षस्य धर्त्री विष्टम्भनीं दिशामधिपत्नीं भुवनानां ऊर्मि

द्रप्सा अपामसि विश्वकर्मा त ऋषिरश्विना-
ध्वर्यू सादयतामिह त्वा ॥ ५ ॥

हे इष्टके! अदित्याः प्रथमचितिरूपायाः पृथिव्याः पृष्ठे उपरि त्वा त्वां सादयामि स्थापयामि। किम्भूतां त्वां अन्तरिक्षस्य भुवर्लोकस्य धर्त्रीं धारयित्रीम्। दिशां पूर्वादीनां विष्टम्भनीं संस्तम्भनकर्त्रीं भुवनानां भूतजातानामधिपत्नीं स्वामिनीम्। किञ्च त्वमपां द्रप्सो रस ऊर्मिरसि रसरूपः कल्लोलस्त्वमसि। विश्वकर्मा प्रजापतिस्ते तव ऋषिः द्रष्टा॥ तं त्वामश्विनौ सादयतामित्युक्तम् ॥ ५ ॥

शुक्रश्च शुचिश्च ग्रैष्मावृतू अग्नेरन्तःश्लेषो-
ऽसि कल्पेतां द्यावापृथिवी कल्पन्तामाप ओष-
धयः कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रताः।
ये अग्नयः समनसोऽन्तरा द्यावापृथिवी इमे
ग्रैष्मावृतू अभिकल्पमाना इन्द्रमिव देवा अभि-
संविशन्तु तया देवतयाङ्गिरस्वद्ध्रुवे सीदतम्
॥ ६ ॥

का० [१७, ८, १६] शुक्रश्च शुचिश्चेत्यृतव्ये पूर्वयोरुपरि। प्रथमचित्युपहितयोरृतव्ययोरुपरि द्वे ऋतव्ये पश्चे प्राग्लक्षणं अनूकमभित उदङ्मुखे उपदधाति शुक्रश्च शुचिश्चेति प्रत्येकमुपधाय। ग्रैष्मावृतू इति मन्त्रशेषो द्वे अप्यालभ्य पठ्य इति सूत्रार्थः॥ उत्कृतिश्छन्दः। शुक्रो ज्येष्ठमासः शुचिराषाढः तौ ग्रैष्मावृतू ग्रीष्मसम्बन्धिनौ ऋतवयवौ। अन्यद् व्याख्यातम् ॥ ६ ॥

सजूर्ऋतुभिः सजूर्विधाभिः सजूर्देवैः सजूर्देवैर्वयोनाधैरग्नये त्वा वैश्वानरायाश्विनाध्वर्यू सादयतामिह त्वा ॥ सजूर्ऋतुभिः सजूर्विधाभिः सजूर्वसुभिः सजूर्देवैर्वयोनाधैरग्नये त्वा वैश्वानरायाश्विनाध्वर्यू सादयतामिह त्वा ॥ सजूर्ऋतुभिः सजूर्विधाभिः सजू रुद्रैः सजूर्देवैर्वयोनाधैरग्नये त्वा वैश्वानरायाश्विनाध्वर्यू सादयतामिह त्वा ॥ सजूर्ऋतुभिः सजूर्विधाभिः सजूरादित्यैः सजूर्देवैर्वयोनाधैरग्नये त्वा वैश्वानरायाश्विनाध्वर्यू सादयतामिह त्वा ॥ सजूर्ऋतुभिः सजूर्विधाभिः सजूर्विश्वैर्देवैः सजूर्देवैर्वयोनाधैरग्नये त्वा वैश्वानरायाश्विनाध्वर्यू सादयतामिह त्वा ॥ ७ ॥

का० [ १७, ८, १७ ] वैश्वदेवीः सजूर्ऋतुभिरिति प्रतिमन्त्रम् । पञ्च मन्त्रैः पञ्च वैश्वदेवीसंज्ञा इष्टकाः पूर्वादिषूपदधातीत्यर्थः ॥ विश्वदेवदृष्टानि विश्वदेवदेवत्यानि पञ्च यजूंषि । हे इष्टके ! देवानामध्वर्यू अश्विना अश्विनौ तां त्वा त्वामिह स्थाने द्वितीयचितौ सादयताम् । किमर्थं वैश्वानराय विश्वेभ्यः सर्वेभ्यो नरेभ्यो हितायाग्नयेऽग्निदमये अग्नये त्वेति त्वाशब्दो या इति प्रथमार्थे प्रातिपदिकसुपोर्व्यत्ययः तां कां या त्वमृतुभिः सजूः जोषणं जुट् प्रीतिः जुषी प्रीतिसेवनयोः सम्पदादित्वाद्भावे क्विप् समाना जूः प्रीतिर्यस्याः सा सजूः समानस्य

छन्दस्युमूर्द्धेति [ पा० ६, ३, ८४ ] समानस्य सादेशः वसन्ता दिभिर्या त्वं प्रीतिमती। तथाविधाभिः या त्वं सजूः अभि विदधति सृजन्ति जगदिति विधा आपस्ताभिः। आपो वै विधा अद्भिर्हीदꣳ सर्वं विहितमिति [ ८, २, २, ८ ] श्रुतेः। अप एव ससर्जादाविति [ मनुः १, ८ ] स्मृतेश्च। तथा देवैरिन्द्रादिभिश्च सजूः। तथा वयो बाल्यादि नह्यन्ति बध्नन्ति ते वयोनाधाः प्राणा देवा दीप्यमानास्तैश्च सजूः। प्राणा वै वयोनाधाः प्राणैर्हीदꣳ सर्वं वयुनं नद्धमिति [ ८, २, २, ८ ] श्रुतेः। यद्वा वयोनाधैर्देवैश्छन्दोभिः सजूः। अथा छन्दाꣳसि वै देवा वयोनाधाश्छन्दोभिर्हीदꣳ सर्वं वयुनं नद्धमिति [ ८, २, २, ८ ] श्रुतेः। एवमुत्तरमन्त्रेष्वपि। यद्वा ऋतुदेवप्राणान् जनयित्वा तैः सजूः सयुग्भूत्वा प्रजापतिर्यथा त्वामुपहितवानेवमहमप्यग्नये त्वामुपदधामीति शेषः। अग्निर्नो चेह त्वां प्रादधनाम तदृतून् प्राजनयदृतुभिर्वै सयुग्भूत्वेति [८, २, २, ८] श्रुतेः॥ उत्तरचतुर्मन्त्रेषु वसुभिः रुद्रैः आदित्यैर्विश्वैर्देवैः सजूरिति विशेषः। शेषं पूर्वतुल्यम् ॥ ७॥

प्राणं मे पाहि। अपानं मे पाहि। व्यानं मे पाहि। चक्षुर्म उर्व्या विभाहि। श्रोत्रं मे श्लोकय। अपः पिन्व। ओषधीर्जिन्व। द्विपाद्व। चतुष्पात्पाहि। दिवो वृष्टिमेरय॥ ८॥

का० [ १७, ८, २० ] प्राणभृतः प्राणं म इति। पञ्चयजुर्भिः प्राणभृत्संज्ञका इष्टकाः पूर्वादिक्रमदधाति॥ पञ्च वायुदेवत्यानि यजूंषि। प्राणो वै वायुर्वायुमेवास्मिन्नेतद्दधाति [ ८, २, ३, २ ] श्रुतेः॥ हे इष्टके त्वं मे मम प्राणं

प्राणरूपं वायुं पाहि पालय॥ एवमपानं मम पाहि। व्यानं आयुश्च मे मम पाहि। उर्व्या विस्तीर्णया इष्ट्या मे चक्षुर्विभाहि विशेषेण प्रकाशय दर्शनसमर्थं कुर्वित्यर्थः। मम श्रोत्रं कर्णेन्द्रियं श्लोकय मह्यं प्रतिगतं कुरु। श्लोक सङ्घाते [ धातु० ४, ३ ] बहुशब्दग्रहणसमर्थं कुर्वित्यर्थः॥ का० [ १७, ८, २१ ] अपः पिन्वेत्याद्याः। पञ्चमन्त्रैरपस्यासंज्ञा इष्टका उपदधाति॥ अन्ते त्वानि पञ्च यजूंषि। हे इष्टके। त्वमपो जलानि पिन्व सिञ्च पिन्वतिः सेचनार्थः। ओषधीर्जिन्व प्रीणय जिन्वतिः प्रीतिकर्मा। द्विपाद्मनुष्यादिरूपमव रक्ष। चतुष्पात् पश्वादिरूपं पाहि पालय। दिवः द्युलोकाद्वृष्टिमेरय आ समन्तात् प्रेरय॥ ८॥

मूर्द्धा वयः प्रजापतिश्छन्दः। क्षत्रं वयो मयन्दं छन्दः। विष्टम्भो वयोऽधिपतिश्छन्दः। विश्वकर्मा वयः परमेष्ठी छन्दः। बस्तो वयो विबलं छन्दः। वृष्णिर्वयो विशालं छन्दः। पुरुषो वयस्तन्द्रं छन्दः। व्याघ्रो वयोऽनाधृष्टं छन्दः। सिंहो वयश्छदिश्छन्दः। पष्ठवाड्वयो बृहती छन्दः। उक्षा वयः ककुप्छन्दः। ऋषभो वयः सतोबृहती छन्दः॥ ९॥

का० [ १७, ८, २२ ] वयस्याः पञ्चानूकान्तेषु मूर्द्धा वय इति प्रतिमन्त्रं चतस्रः पुरस्तात्। दक्षिणोत्तरपश्चिमेष्वनूकान्तेषु पञ्च पञ्च पूर्वं तु चतस्रो वयस्यासंज्ञका इष्टका उपदधात्येकोनविंशतिमन्त्रैरित्यर्थः॥ एकोनविंशतिर्यजूंषि

लिङ्गोक्तदेवतानि। वयःशब्दोपेतमन्त्रैरुपधेया इष्टकाः। अत्र श्रुत्युक्तं निदानम्। पुरा सृष्टवतः प्रजापतेर्व्याकुलात् सकाशात् सृष्टाः पशवश्छन्दोरूपमास्थाय निरगच्छन् ततः प्रजापतिरपि गायत्र्यादिच्छन्दोरूपं स्वीकृत्य पशुसम्बन्धिन्या तत्तद्वयोऽवस्थया तान् पशूनाप्नोत् तदभिधायका मन्त्राः। प्रजापतेर्विस्रस्तात् पशव उदक्रामँश्छन्दाᳩसि भूत्वा तान् गायत्री छन्दो भूत्वा वयमाप्नोदिति [८, २, ३, ९] श्रुतेः। तत्रादौ चतुर्भिर्मन्त्रैः प्रजापतेरष्टावयवात्मकं गायत्रीरूपं परिकल्पयति। मूर्द्धा प्रधानः प्रजापतिश्छन्दो गायत्रीरूपो भूत्वा वयः विभक्तिव्यत्ययः वयसा कृत्वा पशूनाप्नोदिति शेषः। तद्रूपां त्वामिष्टके उपदधामीति सर्वत्र शेषः। अनेन मन्त्रेण प्रजापतेर्द्वाववयवौ कल्पितौ। प्रजापतिर्वै मूर्द्धा स वयोऽभवत् प्रजापतिश्छन्द इति प्रजापतिरेव छन्दोऽभवदिति [८, २, ३, १०] श्रुतेः॥ क्षताच्चायत इति क्षत्त्रं तादृशं वयः शरीरावस्था प्रजापतिरभवत् मयं सुखं ददातीति मयन्दमनिरुक्तं छन्दोऽभवत्। क्षत्त्रं वय इति प्रजापतिर्वै क्षत्त्रᳩ स वयोऽभवन्मयन्दं छन्द इति। यद्वा अनिरुक्तं तन्मयन्दमनिरुक्तो वै प्रजापतिः प्रजापतिरेव छन्दोऽभवदिति [८, २, ३, ११] श्रुतेः॥ अधिपतिः अधिकं पालकः विष्टभ्नाति जगत् स्तम्भयतीति विष्टम्भः ईदृशः प्रजापतिः वयस्तत्पशुवयोऽवस्थावान् छन्दसाभवत्। प्रजापतिर्वै विष्टम्भः स वयोऽभवदधिपतिश्छन्द इति प्रजापतिर्वा अधिपतिः प्रजापतिरेव छन्दोऽभवदिति [१२] श्रुतेः॥ परमे पदे तिष्ठतीति परमेष्ठी विश्वकर्मा सर्वस्रष्टा प्रजापतिर्वयश्छन्दसाभवत्। प्रजापतिर्वै विश्वकर्मा स वयोऽभवत् परमेष्ठी छन्द इत्यापो वै प्रजापतिः परमेष्ठी ता हि परमे स्थाने तिष्ठन्ति प्रजापतिरेव परमेष्ठी छन्दोऽभवदिति

[ १३ ] श्रुते: ॥ एवं प्रतिमन्त्रं द्वौ-द्वाववयवावित्यष्टावयव: प्रजापतिर्गायत्रीरूप: परिकल्पित: तथा चाष्टसंख्योपेतत्वात् सर्वच्छन्द:प्रकृतिभूतं गायत्री छन्दो भूत्वा वयसा तृतीयाया लुक् वयाऽवस्थया वक्ष्यमाणान् पञ्चदश पशून् प्रजापतिरगृह्णात् । तानि वा एतानि चत्वारि वयाᳬसि चत्वारि छन्दाᳬसि तदष्टावष्टाक्षरा गायत्र्येषा वै सा गायत्री या तद्भूत्वा प्रजापतिरेतान् पशून् वयसाप्नोदिति [ ८, २, ३, १४ ] श्रुते: ॥ वस्त: अज: । द्वितीयैकवचनस्य सुपां सुलिति सु-आदेश: । वय इति तृतीयालुक् । विवलं विविधं बलमुत्कृष्टं छन्द: एकपदाख्यं छन्दो भूत्वात्क्रान्तं वस्तं पशुं वयसा तत्तद्वयोऽवस्थया जग्राह । एवमुत्तरमन्त्रेष्वपि विभक्तिपरिणामं कृत्वा तत्तच्छन्दोरूपमास्थाय प्रजापतिस्तत्तद्वयसा तं तं पशुं गृहीतवानिति योज्यम् विशेषस्तु वक्ष्यते । वस्तो वय इति वस्तं वयसाप्नोद्विवलं छन्द इत्येकपदा विवलं छन्द एकपदा ह भूत्वाजा उच्चक्रमुरिति [८, २, ४, १] श्रुते: ॥ विशालं द्विपदागायत्रीरूपं छन्दो भूत्वा वृष्णिं सेचनसमर्थं मेषं वयसा जग्राह । वृष्णिं वयसाप्नोद्विशालं छन्द: इति । द्विपदा वै विशालं छन्दो द्विपदा ह भूत्वा वय उच्चक्रमुरिति.[ ८, २, ४, २ ] श्रुते: ॥ तन्द्रं पङ्क्तिच्छन्दो भूत्वोत्क्रान्तं पुरुषं पशुं वयसाप्नोत् । पुरुषं वयसाप्नोत्तन्द्रं छन्द इति पङ्क्तिर्वै तन्द्रं छन्द: पङ्क्तिर्ह भूत्वा पुरुषा उच्चक्रमुरिति [ ८, २, ४, ३ ] श्रुते: ॥ अनाधृष्टं विराट्छन्दो भूत्वोत्क्रान्तं व्याघ्रं पशुं वयसाग्रहीत् । व्याघ्रं वयसाप्नोदनाधृष्टं छन्द इति विराड्वा अनाधृष्टं छन्दोऽन्नं वै विराडन्नमनाधृष्टं विराड्भूत्वा व्याघ्रा उच्च० [ ४ ]॥ छादयतीति छदिरतिच्छन्दा: छन्दो भूत्वोत्क्रान्तं सिंहं पशुं वयसाग्रहीत् । सिᳬहं वयसाप्नोच्छदि-

स्छन्द इत्यतिच्छन्दा वै छदिश्छन्दः सा हि सर्वाणि छन्दाᳬसि छादयत्यतिच्छन्दा ह भूत्वा सिᳬहा उच्च० [५]॥ अथातो निरुक्तानेव पशून्निरुक्तानि छन्दाᳬस्युपदधातीति [ ५ ] श्रुतेः स्पष्टानि छन्दांसि दशोच्यन्ते। पष्ठे पृष्ठभागे वहतीति पष्ठ-वाट् पञ्चवर्षः पशुः बृहती छन्दो भूत्वोत्क्रान्तं पष्ठवाहं पशुं वयसाग्रहीत्। पष्ठवाहं वयसाप्राद् बृहतीच्छन्द इति बृहती ह भूत्वा पष्ठवाह उच्च० [ ६ ]॥ उक्षा सेचनसमर्थः पशुः आद्यन्तावष्टाक्षरौ पादौ मध्यमो द्वादशाक्षरः सा ककुप् ककुप्-छन्दो भूत्वोत्क्रान्तमुक्षाणं पशुं वयसाग्रहीत्। उक्षाणं वय-साप्नोत्ककुप्छन्द इति ककुब्भूत्वोक्षाण उच्च० [७]॥ ऋषभः सेचनसमर्थोऽनड्वान्। द्वादशाक्षरत्रिपादा सतोबृहती सा भूत्वोत्क्रान्तमृषभं वयसाग्रहीत्। ऋषभं वयसाप्नोत्सतो-बृहती छन्द इति सतोबृहती भूत्वर्षभा उच्च० [ ८ ]॥ ९॥

अनड्वान् वयः पङ्क्तिश्छन्दः। धेनुर्वयो जगतीछन्दः। त्र्यविर्वयस्त्रिष्टुप्छन्दः। दित्य-वाड्वयो विराट् छन्दः। पञ्चाविर्वयो गायत्री छन्दः। त्रिवत्सो वय उष्णिक् छन्दः। तुर्य-वाड्वयोऽनुष्टुप् छन्दः। लोकं पृण छिद्रं पृणाथो सीद ध्रुवा त्वम्। इन्द्राग्नी त्वा बृहस्प-तिरस्मिन् योनावसीषदन्। ता अस्य सूददो-हसः सोमᳬ श्रीणन्ति पृश्नयः। जन्मन् देवानां विशस्त्रिष्वारोचने दिवः। इन्द्रं विश्वा अवी-

